श्रीआत्मानन्दग्रन्थरत्नमाला-चतुष्पञ्चाशत्तमं

अर्हम् ।

श्रीमद्-रत्नप्रभसूरिविरचिता

# कुवलयमाला-कथा

सा च

प्रवर्तकश्रीमत्कान्तिविजयमुनिवरान्तेवासिविद्वद्वर-
श्रीमच्चतुरविजयमुनिवरैः संशोधिता ।

प्रकाशिका

श्रीजैन-आत्मानन्द-सभा

( भावनगर )

प्रथमावृत्तिः ५०० प्रतिः

वीराब्द २४४२
ख्रीस्ताब्द १९१६

मूल्यम्
सार्ध-रूप्यकम्।

# अथ प्रस्तावना ।

एषा किल भारतभूमिः पुरा समृद्धिशालिनी परितुष्टगम्भीरविचारकारिमेधाविमण्डलास्पदं चासीत् । तदा चात्रादर्शजीवनोपयोगिनः सर्वेऽपि वस्तुप्रकाराः प्रादुरभूवन् क्रमशश्च देशान्तरेऽपि प्रासरन् । एवं गणित–लेखन–चित्रण–शिल्प–सङ्गीत–नर्त्तनाद्याश्चतुःषष्टिः कला अपीहैव लब्धजन्मानः क्रमशो विकासमासादयन्त्योऽधुना सर्वत्र परामुत्कर्षकोटीं प्राप्ताः सत्यो नवनवकलागवेषणे च जनान् प्रोत्साहयन्तीत्येतदितिहाससाक्षिकम् । दार्शनिकानामन्यान्यगद्यपद्यमयानां च प्रबन्धानां निर्माणचातुर्यपि विशिष्य चात्र विचकास । ततः प्रतिविषयं साहित्यं पुष्कलतामापत् । तच्च प्राचीनं साहित्यं प्राधान्यतस्तिसृषु संस्कृत–प्राकृत–पालीभाषासु दृश्यते । यद्यपि वैदिका जैना बौद्धाश्च विद्वांसो यथाक्रमं मुख्यतया संस्कृतां प्राकृतां पालीं च भाषामाश्रित्य स्वं स्वं साहित्यं रचितवन्तः, तथापि प्राकृतभाषाया नैसर्गिकपेशलत्वसुगमत्वादिभिर्वैदिकाः संस्कृतभाषायाश्च स्वाभाविकमाधुर्यरामणीयकादिभिर्गुणैर्जैना विपश्चितः समावर्जिता अभूवन् । वैदिकानां कवीनां गौडवध–सेतुबन्ध–दमयन्तीकथाप्रमुखाः प्राकृताः प्रबन्धाः प्रथिताः सन्ति। जैनानामपि श्रीसिद्धसेनदिवाकरप्रभृतीनां महाकवीनां संस्कृतमय्यः कृतयो विश्रुता एव ।

प्रकृता चेयं कुवलयमालानाम्नी रसवती संस्कृता चम्पूः प्राकृतचम्पूकथातः समवतारिता समस्ति । सा च प्राकृतमयी कुवलयमाला एकवासरन्यूने शकीये सप्तशततीतमे संवत्सरे विक्रमार्कीये च पञ्चत्रिंशदधिकेऽष्टशतीतमे वत्सरे समाप्तिं गमिता श्रीमद्भिः श्वेतपटदाक्षिण्यचिह्नापरपर्यायैरुद्द्योतनसूरिभिः श्रीह्रीदेवीवरप्रसादमहिम्ना, तथा च तत्पाठः—

अत्थि पयडा पुरीणं पव्वइया नाम रयणसोहिल्ला ।
तत्थट्ठिएण भुत्ता पुहई सिरितोररसाणेण ॥
तस्स गुरू हरियत्तो आयरिओ आसि गुत्तवंसाओ ।
तीए नयरीए दिन्नो जिणनिवो सा तहिं कालो (?) ॥

बहुकलाकुसलो सिद्धन्तवियाणओ कई दक्खो (?)।
आयरियदेवगुत्तो अज्जवि विज्जरए कित्ती (?)॥
सिवचन्दगणी अह मयहरो त्ति सो एत्थ आगओ देसा।
सिरिभिल्लमालनयरम्मि संठिओ कप्परुक्खो व्व॥
तस्स खमासमणगुणो नामेणं जक्खदत्तगणिनामो।
सिस्सो महइमहप्पा आसि तिलोए वि पयडजसो॥
तस्स य सीसा बहुया तववीरियलद्धचरणसंपण्णा।
रम्मो गुज्जरदेसो जेहिं कओ देवहरएहिं॥
आगासवप्पनयरे वडेसरो आसि जो खमासमणो।
तस्स मुहदंसणे च्चिय अवि पसमइ जो अहव्वो वि॥
तस्स य आयारधरो तत्तायरिओ त्ति नाम सारगुणो।
आसि तवतेयनिज्जियपावतमोहो दिणयरो व्व॥
जो दूसमसलिलपवाहवेगहीरन्तगुणसहस्साण।
सीलङ्गविउलसालो लग्गणखंभो व्व निक्कंपो॥
सीसेण तस्स एसा हिरिदेवीदिन्नदंसणमणेण।
रइया कुवलयमाला विलसिरदक्खिन्नइंधेण॥
दिन्नजहिच्छियफलओ बहुकित्तीकुसुमरेहिराभोओ।
आयरियवीरभद्दो अवावरो कप्परुक्खो व्व॥
सो सिद्धन्तगुरुपमाणनाएण जस्स हरिभद्दो (?)।
बहुगन्थसत्थवित्थरपयडसव्वत्थो (?)॥
राया खत्तियाणं वंसे जाओ वडेसरो नाम (?)।
तस्सुज्जोयणनामो तणओ अह विरइया तेण॥
तुङ्गमलङ्घं जिणभवणमनहरं सावयाउलं विउरं।
अट्ठावयं व पुहईए अह अत्थि (?)॥
तुङ्गं धवलं मणहारिरयणपसरन्तधयवडाडोवं।
उसहजिणिन्दाययणं कारवियं वीरभद्देणं॥
तम्मि ट्ठिएणं अह चोद्दसीए चित्तस्स किण्हपक्खम्मि।
निम्मविया बोहकरी भव्वाणं होउ सव्वाणं॥

एयं कहं कउं जं पुन्नं पावियं मए विमलं (?) ।
साहुकिरियाचित्तं भवे भवे होउ मे तेण ॥
सगकाले वोलीणे वरिसाण सएहिं सत्तहिं गएहिं ।
एगदिणेणूणेहिं एस समत्ता वरण्हम्मि ॥
बुज्झन्ति जत्थ जीवा सिज्झंति वि के वि कम्ममलमुक्का ।
जं च नमियं जिणेहिं तं तित्थं नमह भावेणं ॥
पणमामि उसहनाहं सेसे वि जिणे जउत्तरं नमिमो ।
जणणिजणए य ताणं गणहरदेवे य पणमामि ॥
केवलनाणं पणमामि दंसणं तह य सव्वनाणाइ ।
चारित्तं पञ्चविहं भावेण नमामि संपन्नं ॥
पणमामि धम्मचक्कं जिणाण छत्तत्तियं रयणचित्तं ।
धम्मज्झयं ति वन्दे चेइयरुक्खं पहाजालं ॥
पउमासणं च वन्दे चामरजुयलं च चन्दकिरणाभं ।
सुमरामि दुन्दुभिरवं जिणस्स वाणिं च वन्दामि ॥

* * * * * * *

जिणजम्मणभूमीओ वन्दे निव्वाणनाणमेरुं च ।
सम्मेयसेलसिहरे सिद्धाययणे पणिवयामि ॥
एयं जो पढइ नरो गोसग्गे अयलभत्तिसंजुत्तो ।
सव्वं सिज्झइ कज्जं तद्दियहं तस्स विउलं पि ॥
इय एस गणिज्जंती तेरसकलणाइं जइ सहस्साइं ।
अन्नोऽवि कोऽवि गणेही सो नाही निच्छिया सङ्खा ॥
इय एस [स]मत्त च्चिय हिरिदेवीए वरप्पसाएण ।
कइणो होउ पसन्ना इच्छियफलिया य सङ्घस्स ॥

कृतिः श्रीश्वेतपटनाथमुनेर्दाक्षिण्यलाञ्छनस्योद्द्योतनसूरेः । तस्याश्च भाषारचनाशैली यथास्थानसमुचितपदवाक्यविन्यासो रसव्यक्तिर्वर्णनाप्रकारः प्रासङ्गिककथानकोपन्यासश्च सर्वमेतच्चमत्कारकारी। यथा च—

अन्नदियहे समारूढा हिमगिरिसिहरसरिसं पासायतलं । तत्थ य आरूढेहिं विजयपुरवरीए दक्खिणपायारसेणीबंधं घुअमाणं

महारयणायरं तं च केरिसं। अवि य—गयणं गयं व रुन्दं धवलं कलहोयधोयपत्तं व। दुत्तारदुरन्ततीरं खीरसमुद्दस्स बिम्बं व ॥ १॥ कहिंचि परिहत्थपुच्छच्छडाच्छोडिउच्छलन्तपालियं, कहिंचि निट्ठुरखरकमठपट्ठिसंठिउल्लसन्तविड्डुसंपल्लवं (?), किहिंचि करालमयरग्गमग्गन्तसिप्पिसंपुडं, कहिंचि पक्कणक्ककरवत्तुक्कत्तमाणणीणयं (?), कहिंचि दुग्गाहगाहगहितविवसहीरमाणजक्करिवरं, कहिंचि धवलसंखउल्लोलमाणंकोमयरायरयणदित्तिचित्तलं (?), कहिंचि भिन्नसिप्पिसंपुडुल्लसन्तकन्तमुत्ताहलुज्जलं, कहिंचि जलवट्टियजलविद्दुमदुमगहणरहियं, कहिंचि तणुयतन्तुच्छलियहीरमाणवरकरिवरं, कहिंचि मरगयमणिसिलायलणियभिन्नवन्नदीसन्तमच्छजुवलं, कहिंचि जलकरिदन्तजुवलभिज्जमाणजलमाणुसं, कहिंचि उव्वत्तमाणमहाभुयङ्गभीमाभोगभङ्गभासुरं, कहिंचि जलमाणुसजुयलत्तसुरयकेलीहेलाजलवीसंकुलं, कहिंचि मज्जणावन्नदिसामयन्दावगाहणगण्डयलगलियमयजलसन्दोहबिन्दुणीसन्दपयडपयपसरन्तवेलावलीवलन्तुल्लसन्तवंदयचित्तलजलंति।

प्रमाणं चास्याः कथायाः श्लोकानां त्रयोदशसहस्री। तत्र च कविना कथावस्त्वपि संसारवैषम्यस्य प्रतिबिम्बं सहृदयानां हृदयदर्पणे ग्राहयितुं तथाविधमेव परिकल्पितं वर्त्तते। तच्च संक्षिप्तं कथारहस्यमित्थम्—धर्मप्राप्तिनिमित्तभूतभवात्पञ्चमे भवे मोक्षगामिनो रुद्रसोम–शान्तिभट–गङ्गादित्य–धनदेव–व्याघ्रदत्तनामानः पञ्चजीवाः प्रधानानि पात्राणि, ते च क्रमशः क्रोधमानमायालोभमोहैरभिभूयमाणाश्चण्डसोम–मानभट–मायादित्य–लोभदेव–मोहभटनामभिरन्वर्थव्यपदेशमासादयन्ति, सांसारिकीं यातनां सहमानाः संयममङ्गीकृत्य देवभूयं गत्वाऽन्योन्यस्य धर्मप्रापणाय सङ्गिरन्ते, प्रतिजन्म संमिलन्ति, परस्परस्योपकुर्वन्ति, एकैकस्य धर्मप्राप्तये यतन्ते च। अन्तराऽन्यतमो जीवः कुवलयचन्द्रकुमाररूपेणावतीर्य राजकुमारीकुवलयमालाकृते बहुचेष्टमानो दूरं पर्यटन् समन्ततः परिभ्रामति, तदीयेन वृत्तेन कथाया भूयान् भागो भूषितो भाति, अत एव कुवलय-

मालानाम्ना कथाया व्यपदेशोऽपि कृतो ज्ञायते । ततश्च पञ्चापि ते यथावसरं धर्ममाराध्य ततश्च्युत्वा प्रान्ते सर्वे च जीवाः क्रमशश्चरमशासनपतिं श्रीवर्द्धमानस्वामिनं समया दीक्षामादाय मुक्तिपदमनुव्रजन्ति स्म ।

अस्यां च कथायामन्तरान्तरा भूयांसो रोचकतराः कथांशाः सामयिका उपदेशाश्च निवेशिताः सन्ति । नगनगरनदीनदीशादिवर्णनं महाकाव्यसमुचितं सर्वमेव रसपरिपूरितमनुपदमालक्ष्यते । एतदेवाविकलं कथावस्तु संक्षेपेण संस्कृतभाषावतारितायां कुवलयमालायां प्रतिसंक्रमितं वर्त्तते । श्रीमदुद्द्योतनसूरिभिः कथाया उपोद्धाते मङ्गलमयानि कानिचित्पद्यानि निर्माय कतिपयानां कविमान्यानां नामानि स्मृतिपथमानीतानि सन्ति । तत्र पूर्वं तरङ्गलोलाकथासूत्रधाराः पादलिप्ताचार्याः समनन्तरं शालीवाहन–षट्पर्णक–बाण–विमलाङ्क–देवगुप्त–बन्दिक–प्रभञ्जन–रविषेण–हरिभद्रसूरिप्रभृतयो महान्तः कवयः कथाकारत्वेन निर्दिष्टाः । तदनन्तरं सकलकथादिभिर्भेदैः पञ्चधा कथां विभज्य संकीर्णकथासमाश्रयणमतिसुखावहत्वेन प्रतिज्ञातं वर्त्तते । तथा च तदीयः प्रारम्भिको भागः—

पढमं नमह जिणिन्दं जाए नच्चन्ति जम्मि देवीओ ।
उव्वेल्लिरबाहुलया रणन्तमणिवलयनालेहिं ॥
पुरिसकरधरियकोमलणलिणीदलजलतरङ्गरङ्गन्तम् ।
णिव्वत्तरायमज्जणबिम्बं जेणप्पणो दिट्ठं (?) ॥
वसिउं चिरं कुलहरे कलाकलावसहिआ णरिन्देसु ।
धूय व्व जस्स लच्छी अज्जवि य सयंवरा भमइ ॥
जेण कओ गुरुगुरुणो गिरिवरगुरुनियमगहणसमयम्मि ।
सहरिसहरिवासद्धन्तभूषणो केसपब्भारो ॥
तवतवियपावकलिणो नाणुप्पत्तीइ जस्स सुरनिवहा ।
संसारनीरनाहं तरियं ति पणच्चिरे तुट्ठा ॥
जस्स य तित्थारम्भे तियसवइत्तणविमुक्कमाहप्पा ।
करकमलमउलिसोहा चलणेसु णमन्ति सुरवइणो ॥
तं पढमपुहइपालं पढमपवत्तियसुधम्मवरचक्कं ।
निव्वाणगमणइद्धं पढमं पणमह मुणिगणिन्दं ॥

❧ ❧ ❧ ❧ ❧ ❧ ❧

जा सुपुरिसगुणवित्थरमइलणामेत्तवावडा होमो ता ताव वरं जिणयन्दसमणचरियं कयं हियए इमं च चिन्तिऊणं तुब्भे वि निसामेह साहिज्जमाणं किञ्चि कहावत्थुं ति। अवि य—

मा दोसे च्चिय गिण्हह विरले वि गुणे पसंसह जिणस्स।
अक्खपउरो वि उयही भण्णइ रयणायरो लोए॥

तओ कहाबन्धं विचिन्तेमि त्ति। तत्थ वि—

पालित्तसाहलाहणछप्पण्णयसीहणायसद्देण।
संखुद्धमुद्धसारङ्गउ व्व कह ता पयं देमि॥
निम्मलगुणेण गुणगुरुयए य ण परमत्थरयणसारेण।
पालित्तएण हालो हारेण व सहइ गोट्ठीसु॥
चक्कायजुवलसुहया रम्मत्तणरायहंसकयहरिसा।
जस्स कुलप्पव्वयस्स व वियरइ गङ्गा तरङ्गमई॥
भणियविलासवईत्तणचोक्किल्ले जो करेइ हलिए वि।
कव्वेण किं पउत्थे हाले हालावियारे व्व॥
पणईहिं कइयणेण य भमरेहिं व जस्स जायपणएहिं।
कमलायरो व कोसो विलुप्पमाणो वि हु न झीणो॥
सयलकलागमनिलया सिक्खावियकइयणो सुमुहयन्दा।
कमलासणा गुणड्ढा सरस्सई जस्स वड्डकहा॥
जे भारहरामायणदलियमहागिरिसुगम्ममग्गे—(?)।
लङ्घेइ दिसाकरिणो कइणो को वासवंमीए (?)॥
छप्पन्नयाण किं वा भन्नइ कयकुञ्जराण भुवणम्मि।
अन्नो वि छेयभणिओ अज्जवि उवमिज्जए जेहिं॥
लायन्नवयणसुहया सुयण्णरयणुज्जला य बाणस्स।
चन्दावीणस्स वणे जाया कायम्बरी जस्स॥
जारिसयं विमलङ्को विमलं को तारिसं लहइ अत्थं।
अमयमइयं च सरसं सरसं च्चिय पाइयं जस्स॥
तिउरिसचरियपसिद्धो सुपुरिसचरिएण पायडो लोए।
सो जयइ देवगुत्तो वंसे गुत्ताण रायरिसी॥

बुहयणसहस्सदइयं हरिवंसुप्पत्तिकारयं पढमं ।
वन्दामि वन्दियं पि हु हरिवंसं चेव विमलपयं ॥
सन्निहियजिणवरिंदा धम्मकहाबन्धदिक्खियनरिन्दा ।
कहिया जेण सुकयिहा सुलोयणा समवसरणं वा ॥
सत्तूण जो जसहरो जसहरिचरिएहिं जणवए पयडो ।
कलिमलयभञ्जणे च्चिय पहञ्जणो आसि रायरिसी ॥
जेहिं कए रमणिज्जे वरङ्गपउमाण चरियवित्थारे ।
कह व न सलाहणिज्जे ते कइणो जडियरविसेणो ॥
जो इच्छइ भवविरहं भवविरहं को न बन्धए सुयणो ।
समयसयसत्थगुरुणो समरमियङ्का कहा जस्स ॥
अन्ने वि महाकइणो गरुयकहाबन्धचिन्तियमईओ ।
अहिमाणपरक्कमसाहसं कवियणे विइन्तेमि ॥
एयाण कहाबन्धे तं नत्थि जयम्मि जं कहवि चुक्कं ।
तहवि अणन्तो अत्थो कीरइ एसो कहाबन्धो ॥

ताओ पुण पञ्च कहाओ, तंजहा—सयलकहा १ खण्डकहा २ उल्लावकहा ३ परिहासकहा ४ तहा वरकहिय ५ त्ति । एयाओ सव्वाओ एत्थ पसिद्धाओ सुन्दरकहाओ एयाण लक्खणधरा संकिन्नकह त्ति च नायव्वा ।

कत्थ य रूवयरइया कत्थ य वयणेहिं ललियदियएहिं ।
कत्थइ उल्लावेहिं कत्थइ कुलएहिं निम्मविआ ॥
कत्थइ गाहारइया कत्थइ दुवईहिं गीइयासहिया ।
दुवलयचक्कलएहिं तियलिय तह भिन्नएहिं च ॥
कत्थइ दण्डयरइया कत्थइ नारायतोडगेहिं च ।
कत्थइ वित्तेहिं पुणो कत्थइ रइया तरङ्गेहिं ॥
कत्थइ उल्लावेहिं अवरोप्परहासिएहिं वयणेहिं ।
मालावयणेहिं पुणो रइया विविहेहिं अन्नेहिं ॥
पाइयभासारइया मरहट्ठयदेसिवण्णयनिबद्धा ।
सुद्धा सयलकह च्चिय तावसजिणसत्थवाहिल्ला ॥

कोऊहलेण कत्थइ परवयणवसेण सक्कयनिबद्धा ।
किञ्चि अवब्भंसकया दो विय पेसायभासिल्ला ॥
सव्वकलागुणजुत्ता सिङ्गारमणोहरा सुरइयङ्गा ।
सव्वकलागमसुहया संकिण्णकह त्ति नायव्वा ॥
एयाणं पुण मज्झे एस च्चिय होइ एत्थ रमणिज्जा ।
सव्वभणिईण सारो जेण इमा तेण तं भणिमो ॥

उपरितनकविनामावलीमध्ये भवविरहेति समरमियङ्केति पदेन च निर्दिष्टानां श्रीमतां परःसहस्रशास्त्रप्रणेतॄणां हरिभद्रसूरीणां सत्तासमयोऽष्टमशताब्द्याः प्राक्तन एव स्यात् । तेन यत्कैश्चिदुपमितिभवप्रपञ्चाकथाकारश्रीसिद्धर्षिसमकालवर्त्तिता स्वीकृता तन्निरस्तम् ।

अथ प्रस्तुता संस्कृतकुवलयमालाचम्पूकथाऽविकलमूलभूतकथावस्तुकलिता यथास्थानपरिपोषितरसा गुणवनी प्रचुरालङ्कारालङ्कृता च । एतदीयं गद्यं न केवलं श्रवणप्रियं किन्तु हृदयहार्यपि । एतदीयानि पद्यानि न केवलं प्रसन्नानि किन्तु विविधव्यङ्ग्यव्यञ्जकान्यपि । एतदीयोऽर्थो न केवलमपूर्वतया चित्ताकर्षकः किन्तु स्वानुभवसंवेद्यसमतया स्वाभाविकतया च हृदयाह्लादकारी । एतत्कथान्तःपातिनः आनुषङ्गिका उपदेशा न केवलं मनो रञ्जयन्ति किन्तु तत्त्वज्ञानायापि प्रकल्प्यन्ते । एतच्च सर्वमपि प्रेक्षावन्तः पुस्तकावलोकनेन स्वयमेवावभोत्स्यन्ते इति कृतं विस्तरेण ।

अस्याश्च कथायाः प्राकृततः संस्कर्तारः श्रीमत्परमानन्दसूरिशिष्याः श्रीमन्तो रत्नप्रभासूरयस्तेषां चास्तित्वसमयो विक्रमार्कीयायास्त्रयोदशशताब्द्या उत्तरार्द्धं चतुर्दश्याः शताब्द्याः प्रारम्भ एव वा संभाव्यते यत एतत्कथासंशोधनं चतुर्दशशताब्दीप्रारम्भवर्त्तिभिः श्रीमत्कनकप्रभसूरिशिष्यैः श्रीमद्भिः प्रद्युम्नसूरिभिः कृतं संभाव्यते यतस्ते एव प्रद्युम्नसूरयः प्रायशो विवेकमञ्जरीटीका–शान्तिनाथचरित्र–धर्मोपदेशमाला–शालिभद्रचरित्रप्रभृतीन् ग्रन्थान् संशोधितवन्त इति तत्तद्ग्रन्थप्रान्तभागावलोकनेन निर्धार्यते । ग्रन्थकारा हि प्रायशो ग्रन्थं निर्माय स्वसमयवर्त्तिना केनापि विश्वस्तेन विदुषा संशोधयन्तीत्यविच्छिन्ना परम्परा प्रसिद्धैव । ततश्च यद्यपि प्रद्युम्नसूरिनामानोऽष्टौ सूरयोऽभूवन् तथापि संशोधकत्वेन विश्रुतिं गतैश्चतुर्दशशता-

श्रीप्रारम्भभूषणायमानैः प्रद्युम्नसूरिभिः समसमयवर्त्तित्वं प्रस्तुतकथाकृतां श्रीरत्नप्रभसूरीणां संभाव्यमानं नैकपदे सुस्थिरम्।

श्रीमन्तो रत्नप्रभसूरयो मूलकथाकृतो दाक्षिण्यचिह्नसूरीन् ग्रन्थारम्भे एव प्रणिपत्य प्राचीनान् मूलकथोपोद्घातनिबद्धान् महाकवीन् निर्दिश्य च गुणग्राहकतां दर्शितवन्त इति विदुषां स्मार्यम्।

"नमः श्रीह्रीदेवतायै। नमः श्रीबृहत्कुवलयमालाकथाविधायिने श्रीदाक्षिण्यचिह्नसूरिप्रवराय। ॐ अर्हम्।" इत्येतावान् पाठो यद्यपि ग्रन्थारम्भे ग्रन्थकृद्भिरुपनिबद्धोऽस्ति परमस्माभिर्मुद्रयितुं व्यस्मारीतीत एवावगन्तव्यो बुद्धिमद्भिः। संस्कृतप्राकृतोभयकथायामपि क्वचिद् दृढवर्मेति क्वचिद् दृढधर्मेति च भिन्नभिन्नपाठदर्शनादस्माभिर्दृढवर्मेति पाठं प्रधानीकृत्य परः कोष्ठके ( ) निक्षिप्तः। किञ्च लेखककालादिदोषवशेन यत्र यत्र पाठविच्छेदेन संबन्धस्त्रुटितः प्रतिभाषितः तत्र तत्र संगतिसंपादनाय प्राकृतकथानुसन्धानेन स्वकल्पनाश्रयणेन च [ ] एतादृशकोष्ठकान्तरे नव्य एव पाठः सन्दृब्धः। अपरं च प्राकृतकुवलयमालाया एकैव प्रतिः प्राप्यते ततश्चोपरिष्टाद्यथावद्विशुद्धिरहिता एव प्राकृतपाठाः यथोपलम्भं निदर्शनीकृतास्ते च धीमद्भिर्वाचकैः संशोध्य वाचनीयाः।

अस्याश्च कुवलयमालायाः संशोधनावसरे त्रीणि पुस्तकानि समासादितानि। तत्र कसंज्ञकं पंन्यासश्रीमत्सिद्धिविजयस्वामिकं नवनवतिपत्रात्मकं पट्षष्ट्यधिकचतुर्दशशतीतमे संवत्सरे लिखितम्। खसंज्ञकं पूज्यपादप्रवर्त्तकश्रीमत्कान्तिविजयसत्कं त्रिसप्ततिपत्रमयं एकषष्ट्यधिकैकोनविंशतिशतीतमे संवत्सरे लिखितम्। एते च द्वे पुस्तके प्रायेण समानपाठे समशुद्धाशुद्धे च। गसंज्ञकं च पुस्तकं स्तम्भनपुरीयपुस्तकागारसत्कं पंन्यासश्रीमदानन्दसागरद्वारा संप्राप्तं द्विचत्वारिंशत्पत्रात्मकम्—"एवं श्लोक ३८९४ परं मया किमपि किमपि स्तोकं कुत्रचिद्वर्णनादिकं मुक्तमस्तीति ज्ञेयं सर्वैः। संवत् १४८७ वर्षे भाद्रपदमासे कृष्णपक्षे एकादश्यां तिथौ बुधवारे मालवकदेशेऽद्येह श्रीगोरीखानराज्ये सीणउराग्रामे पूज्यप्रभुभट्टारकपुरन्दरसोमसुन्दरसूरिस्तत्शिष्यपण्डितहर्षमूर्तिगणियोग्यवाचनार्थं कुवलयमालाचरित्रं श्राद्धपद्मेन लिखितमिदम्।" इति तदीयप्रान्तवर्त्तिपाठावलो-

कनेन संवत् १४८७ वर्षे लिखितं पूर्वोक्तपुस्तकद्वयाद्विशिष्य संक्षेपितं वर्त्तते इति ज्ञायते। एतत्पुस्तकत्रयप्रेषणेन साहाय्यमनुष्ठितवतः पूज्यमहाशयान् वयमसकृद्धन्यवादयामः।

एतत्पुस्तकसंशोधनं महता प्रयासेन कृतवन्तः श्रीमन्तः सर्वदापुस्तक-संशोधनसमर्पितचेतसः श्रीचतुरविजयमुनिपादाः। यद्यपि संशोधनकर्मणि प्रचुरमवधानमवाधारि तथापि प्रमादादिदोषवशादक्षरयोजकदोषवशाद्वा क्वापि त्रुटिर्यद्यवशिष्यमाणा वाचकानां दृष्टिपथमवतरेत्तदा सा निराकरणीया सूचनादानेन चोपकारविषयतां नेतव्या इत्यतो नाधिकमाशास्महे—

| | |
|---|---|
| विक्रमसंवत् १९७२ मितवर्षे भाद्रपदस्य<br>कृष्णचतुर्दश्यां मङ्गलवासरे<br>संदब्धेयं प्रस्तावना। | सविनयनिवेदकाः<br>भावनगरस्थश्रीजैन-आत्मा-<br>नन्द-सभाया मन्त्रिणः। |

॥ अर्हम् ॥

॥ न्यायाम्भोनिधिश्रीमद्विजयानन्दसूरीश्वरपादपद्मेभ्यो नमः ॥

श्रीमद्रत्नप्रभसूरिविरचिता

# कुवलयमालाकथा ।

आदित्यवर्णं तमसः परस्तादस्तान्यतेजःप्रचयप्रभावम् ।
यमेकमाहुः पुरुषं पुराणं, परात्मदेवाय नमोऽस्तु तस्मै ॥ १ ॥

लोकालोकलसद्विचारविदुरा विस्पष्टनिःश्रेयस-
द्वारः स्फारगुणालयस्त्रिभुवनस्तुत्यांह्रिपङ्केरुहः ।
शश्वद्विश्वजनीनधर्मविभवो विस्तीर्णकल्याणभा
आद्योऽन्येऽपि मुदं जनस्य ददतां श्रीतीर्थराजश्चिरम् ॥ २ ॥

गोभिर्वितन्वन् कुमुदं विमुद्रं, तमःसमूहं परितः क्षिपंश्च ।
ददातु नेत्रद्वितयप्रमोदं, श्रीशान्तितीर्थाधिपतिर्मृगाङ्कः ॥ ३ ॥

शिवाय भूयादपुनर्भवाय, शिवाङ्गजन्मा स शिवालयो वः ।
जन्मप्रभृत्येव न यस्य कस्य, ब्रह्मव्रतं विश्रुतमेतदत्र ॥ ४ ॥

अष्टमूर्तिरिव भाति यो विभुर्नम्रनागमणिराजिबिम्बितः ।
दर्पकोपचितिविच्युतिक्षमः, क्षेममेष तनुतां जिनः स वः ॥ ५ ॥

यन्नाममन्त्रवशतोऽपि शरीरभाजां,
नश्यन्ति सामजघटा इव दुष्कृतौघाः ।

पादाग्रलाञ्छनमृगेन्द्रभुवा भियेव,
देवः स वः शिवसुखानि तनोतु **वीरः** ॥ ६ ॥

सा **भारती** यच्छतु वाञ्छितानि, यस्याः प्रसादात्कवयो वयन्ति ।
प्रबन्धवासः सुगुणाभिरामं, न यस्य मूल्यं न च जीर्णता च ॥ ७ ॥

भास्वन्तमत्यन्तमुदा द्विधा तं, गुरुं तमस्तोमहरं प्रणौमि ।
गोसङ्गतो यस्य भवत्यवश्यं, विकस्वरं ज्ञानसरोजमेतत् ॥ ८ ॥

कुवलयमालेव कथा, **कुवलयमालाह्वया** कुवलयेऽस्मिन् ।
अर्थप्रपञ्चपरिमलपरिमिलिताभिज्ञरोलम्बा ॥ ९ ॥

**दाक्षिण्यचिह्न**मुनिपेन विनिर्मिता या,
प्राक् प्राकृता विबुधमानसराजहंसी ।
तां संस्कृतेन वचसा रचयामि चम्पूं,
सद्यः प्रसद्य सुधियः प्रविलोकयन्तु ॥ १० ॥

गतिचतुष्टयसंभूतप्रभूतदुष्कृतमयापारसंसारसागरे परिभ्रमता जन्तुना महता कष्टेन मनुष्यभवः प्राप्यते । तत्रापि दुर्लभप्राप्तपुरुषत्वेन सत्पुरुषेण पुरुषार्थेष्वादरः कर्तव्यः । ते पुनस्त्रिरूपा धर्मार्थकामाः । केषाञ्चिन्मोक्षश्चेति । एतैर्विरहितस्य पुरुषस्य महद्दर्शनाभिरामस्यापि केवलं निष्फलं जन्मेति । यतस्तेषु च विशेषत एव धर्मः श्रेयस्तरः । स पुनस्तावद्बहुविधो लोकप्रसिद्धश्च । सर्वेषां मणीनामिव कौस्तुभः, कुञ्जराणामिव सुरगजः, सागराणामिव क्षीरसागरः, नृणामिव चक्रवर्ती, शाखिनामिव कल्पशाखी, शैलानामिव सुमेरुः, सुराणामिव देवेन्द्रः, तेषां धर्माणामुपरि विराजते जिनेन्द्रप्रणीतो धर्मः । स च चतुर्विधो दानशीलतपोभावनाभेदैः ।

तत्र प्रथममेव प्रथमतीर्थपेन प्रथितपृथुमहिम्ना धनसार्थवाहभवे व्रतिभ्यः प्राज्यमाज्यं ददता रोपितो दानधर्मः । ततः सिद्धगन्ध-र्वादीनां प्रत्यक्षं प्रतिज्ञां समाश्रयता भगवता सर्वं मम पापमकरणी-यमिति प्रकटीकृतः शीलधर्मः । वर्षोपवासस्थितेन प्रकाशितो लोके तपोधर्मः । तथैकान्ताशरणत्वकर्मवर्गणाबन्धमोक्षनारकतिर्यग्गतिन-रामरगमनागमनदुःखसुखधर्मशुक्लध्यानादिभावनां भावयता भगवता निवेदितो भावनाधर्मः । ततोऽस्मादृशस्तादृशैर्दानादिभिस्त्रिभिर्दूरत एव परित्यक्ताः । यतः सत्त्वसंहननवर्जिताः । तस्मादेष संवेगका-रको भावनाधर्मः सुखकरणीय इति । यतः सदा सत्पुरुषालीक-दोषप्रवृत्तिपराः प्रमादपरवशचेतसो दुर्जनपार्श्ववर्तिनः परमर्ममार्गा-नुसारिणस्तिष्ठामः, ततः श्रीमज्जिनेन्द्रश्रमणपुङ्गवसत्पुरुषगुणग्रामा-भिरामोत्कीर्तनेन सफलीक्रियते जन्मेति । अन्यच्च—ये च पूर्वं पादलिप्त-शातवाहन-षट्कर्णक-विमलाङ्क-देवगुप्त-बन्दिक-प्रभ-ञ्जन-श्रीहरिभद्रसूरि-प्रभृतयो महाकवयो बभूवुः । येषामेकै-कोऽपि प्रबन्धोऽद्यापि सहृदयानां चेतांस्यनुहरति । ततः कथं तेषां महाकवीनां कवित्वतत्त्वपदवीमनुभवामः? । यद्यूर्णनाभलालाभिर्म-दोन्मत्ता करिणो बध्यन्ते, यदि वा तुच्छगुञ्जाफलैरनुपमानां विद्रु-माणां शोभा प्राप्यते, यदि वा काचशकलैर्वर्यवैडूर्यमणिप्रभा प्रका-श्यते, यदि वा भुजाभ्यामुभाभ्यामम्भोधिस्तीर्यते, यदि वा काञ्च-नगिरिस्तुलया तोल्यते, ततश्चतुरचेतसां चमत्कारिणी कथा मादृशै-रपि समुदीर्यते । परमियं तु न कवित्वमदेन, न च शब्दशास्त्र-प्रावीण्येन, न च साहित्यसौहित्येन, न च कर्कशतर्ककौशलेन, किन्त्वात्मनो विनोदाय । सा च पञ्चधा सकल-खण्ड-उल्लाप-परि-

हास-वरास्त्र्यादिभिः कथाभिः । एताः कथाः सर्वा अपि प्रसिद्धाः । एतासां लक्षणधरा संकीर्णकथा ज्ञातव्या । अथ संकीर्णकथैवोच्यते । साऽपि त्रिविधा धर्मार्थकामकथाभिः । ततो धर्मकथैव भण्यते । सा च धर्मकथा चतुर्विधा, आक्षेपिणी १ विक्षेपिणी २ संवेगजननी ३ निर्वेदजननी ४ चेति । तत्राक्षेपिणी मनोऽनुकूला १, विक्षेपिणी मनःप्रतिकूला २, संवेगजननी ज्ञानोत्पत्तिकारणम् ३, निर्वेदजननी वैराग्यजनका ४ । ततः प्रस्तुतकथाशरीरमुच्यते—तच्च कीदृशम्? सम्यक्त्वलाभगुरुतरं परस्परनिर्व्यूढसुहृत्कार्यं निर्वाणगमनसारमेतद्दाक्षिण्यचिह्नेन सूरिणा निर्मितम् । यथा—स कथास्वामी **कुवलयचन्द्रो** जातः । यथा च प्राक्संगतेन देवेन हृतः । यथा च तेन सिंहो देवः साधुश्च दृष्टाः शून्ये कानने । यथा स पूर्वजन्म पञ्चानामपि जनानां मुनिमुखाच्छुश्राव । यथा स सिंहश्च सम्यक्त्वं प्रतिपन्नौ । यथा स्वर्गाच्च्युताः परेऽपि स कुमारश्च दुस्तपं तपो विधाय स्वर्गमार्गमगमन् । तत्र विविधान् भोगान् भुक्त्वा यथा पुनर्भरतक्षेत्रे समुत्पद्यान्योन्यमजानन्तः सन्तः सर्वेऽपि केवलिना बोधिताः । श्रामण्यं च निरन्तरं प्रपाल्य संविग्नास्तपस्तीव्रं निर्माय कर्म विनिर्मथ्य यथा मोक्षलक्ष्मीमीयिवांसः । तत्सर्वमपि प्रसन्नाया **ह्रियो** देवताया मुखतः श्रुत्वा **कुवलयमालायां** कथायां पूर्वकविना निबद्धम् । तथाऽत्राप्यसारवचसाऽपि मया भण्यमानं महात्मभिः श्रोतव्यम् । यतः—

निस्तेजसोऽपि माहात्म्यं महानर्पयति श्रितः ।
भर्गसंसर्गतः[1] पश्य, पावित्र्यं भस्मनोऽपि हि ॥ १ ॥

---

१ शिवसंसर्गादित्यर्थः ॥

सर्वथैव परित्याज्यः, स दूराद्दुर्जनः सताम् ।
द्विधा स्वेनार्पितेनापि, यः परं कुरुते द्विधा ॥ २ ॥
तद्विहाय तयोश्चर्चां, स्वस्वकार्यविहस्तयोः ।
अस्याः कथायाः संक्षेपः, क्रियते स्वार्थसिद्धये ॥ ३ ॥

तथाहि—

**जम्बूद्वीपे** द्वीपे घर्मवारणसधर्मणि षट्खण्ड**भरत**क्षेत्रस्य दक्षिणार्धे मध्यमदेशावनीमौलिमण्डनमणि**र्विनीता** नाम नगरी । या महापुरुष**नाभिजन्मनो** जिनेश्वरस्य समेतवासवकृतराज्याभिषेकानन्तरं संप्राप्तनलिनीदलनिक्षिप्तवारिव्यापृतकरमिथुनकपर्यस्तचरणयुगलाभिषेकदर्शनसहर्षहरिप्रजल्पितसाधुविनीतपुरुषाङ्किता **विनीते**ति प्रसिद्धा तदाऽभवत् । यत्र च शक्रः स्वयं प्रमुदितचेता भक्तिभरनिभृतो वासनावासितान्तःकरणोऽनन्तमहिमामेयगाङ्गेयच्छायकायश्री**नाभेयस्य** समुच्छ्रितमपनीतहृदयावसादं प्रासादं कारयाञ्चकार । या चानन्तप्रवरसुरभुवननिवहाग्रध्वजाञ्चलैः करैरिव मत्सदृशी पुरी नाऽपरास्ति [इति] निवेदयतीव । यत्र शुभ्रशरदभ्रविभ्रमधारिणि स्फुटस्फाटिकमयान्यभ्रंलिहाग्राणि हर्म्याणि सुरपथपथसंचरिष्णोरुष्णांशोरपि विरचयन्ति स्यन्दनस्खलनम् । यत्र द्विमुखो मृदङ्गः, तीक्ष्णो मण्डलाग्रः, भ्रमणशीलो मधुकरः, सकलङ्कश्चन्द्रः, प्रवासी राजहंसः, चित्रलो मयूरः, अविनयी बालः, चपलः प्लवगः, परोपतापी ज्वलन एव न पुनर्जनः । यत्र च स्पर्श एव प्रस्तरः, पीयूषमेव जलम्, छायाद्रुम एव द्रुमः ।

वर्ण्यते सा कथं देवैः ?, किल शक्रनिदेशतः ।
या श्रीमन्नाभिपुत्रस्य, निवासार्थं विनिर्ममे ॥ १ ॥

यां वीक्ष्य पथिका नैककौतुकानां निकेतनम् ।
प्रवासालापवैधुर्यै, स्वप्रियाणां विसस्मरुः ॥ २ ॥
तद्वस्तु नास्ति यत्तत्र, प्राप्यते प्राणिभिः सुखम् ।
यत्कथास्वपि वर्तेत, तत्सर्वमपि वीक्ष्यते ॥ ३ ॥
यत्र वक्राङ्गता हंसे, मत्स्ये च स्वकुलक्षयः ।
अरिष्टं सूतिकागेहे, जने नैव कदाचन ॥ ४ ॥
राजन्ते यत्र कासारा, नराश्च कमलाश्रिताः ।
सद्वृत्तशालिनः स्वच्छाः, सच्छाया द्विजभूषिताः ॥ ५ ॥
यन्मृगाक्षीमुखाम्भोजलावण्येन विनिर्जिता ।
तपस्यतीव त्रपया, सरोजालिः सरोजले ॥ ६ ॥
अनन्तवैभवोपेतनिकेतोन्नतकेतनैः ।
छन्नायां यत्र मार्तण्डमण्डलं न दृशां पथि ॥ ७ ॥

तत्र दृढधर्मो नाम राजा । यः सरलो दाक्षिण्यनिधिर्दानशौण्डो-दयालुः शरणागतवत्सलः प्रियंवदः [ च ] । यस्तु दौर्गत्यशीतसंतापितानां दहनः; न पुनर्दहनः, सुजनवदनकमलाकराणां तपनः; न पुनस्तपनः, घनसमयः स्वजनकदम्बानाम्, शरदागमः प्रणयिजनकुमुदवनस्य, हेमन्तः प्रतिपक्षलक्षकामिनीकमलिनीनाम्, शिशिरकालः (रः) सौधयुवतीजनकुन्दलतानाम्, सुरभिर्मित्रकाननाम्, ग्रीष्मः शत्रुजलाशयानाम्, कृतयुगावतारो निजक्षितिमण्डले, कलिकालो वैरिनरेन्द्रराज्येषु, संतुष्टः स्वकलत्रेषु; न पुनः कीर्त्तिषु, लुब्धो गुणग्रामेषु; न पुनरर्थेषु, गृद्धः सुभाषितेषु; न पुनरकार्येषु, सुशिक्षितः कलासु; न पुनरलीककपटचाटुवचनेषु । तस्य करालकरवालधाराविदारितवैरिवारणकुम्भस्थलीगलितमुक्ताफलविभूषिताखिलक्षितितलस्य सर्वत्रा-

स्खलितप्रसृतनिस्सीमप्रतापतपनशोषिताशेषविपक्षलक्षकीर्त्तिसरसीवि-सरस्य शरच्चन्द्रचन्द्रिकावदातगुणसङ्घातस्य निरवधिसौभाग्यलक्ष्मीकटाक्षलहरीलक्षितसाभिलाषवपुर्वैभवस्य नम्रानेकनरेश्वरशिरःश्रेणिमणिमुकुटतटोद्भवप्रभाजालपिञ्जरितपादारविन्दस्य प्रतापाक्रान्तदिक्चक्रवालप्रान्तविश्रान्तशासनस्य मधुमथनस्येव कमला, कुमुदबन्धोरिव कौमुदी, नीरुपमरूपतिरस्कृतसुरसुन्दरीसार्था अनन्यसामान्यपुण्यलावण्योपचिता अविकलकलाकलापकलिता सदा सद्धर्मध्यानदत्तावधाना सर्वान्तःपुरप्रधाना समग्रगुणग्रामाभिरामा स्वयंवरपरिणीता **प्रियङ्गुश्यामा** कान्ता कान्ता बभूव । अथ तस्य तया साकं नाकेश्वरस्येव शच्या विषयसुखमनुभवतः कोऽपि कालो व्यतिचक्राम ।

अन्यदा चाभ्यन्तरसभासीनस्य तस्य भूपस्य कतिपयमन्त्रिजनपरिवृतस्य स्नेह[1]वशप्रियाप्रतिष्ठितवामपार्श्वस्य बाहुलताऽवलम्बितवेत्रलता प्रतिहारी समाययौ । तया विनतया भूपतेः पदपद्मयुग्ममयुग्मभक्त्या विज्ञप्तम्—'देव ! एष **शबरसंज्ञसेनापतिपुत्रः सुषेणाख्य**स्तदा देवस्यैवाज्ञया मालवनरेन्द्रविजयार्थं ययौ स साम्प्रतं द्वारि स्वामिनश्चरणाम्बुजदर्शनमभिलषन्नस्ति' । राज्ञोक्तम्—'प्रविशतु' इति । 'यदाज्ञापयति देवस्तत्प्रमाणं' [इति] वदन्त्या तया प्रवेशितः सेनानीः । स च नृपं विलोक्य किञ्चिद्भूभागमुपसर्प्य ननाम । राज्ञाऽपि 'आसनमासनं' इति जल्पता दक्षिणकरतलेनोत्तमाङ्गं परिस्पृश्य सम्मानितः । ततो विरचितदेवीप्रणामः स सकलसामवायकनायकगणानतिदूरे यथोचितविष्टरे निषसाद । अथ पृथ्वीभृता तमासनासीनं **सुषेणं** निरीक्ष्य हृदयाभ्यन्त[2]रप्रवर्तितप्रमोदामृतपूरितनिस्यन्दबिन्दुसन्दोह-

---

१ ग–"सप्रियस्य बाहु०" इत्यपि । २ ग–"न्तरे प्रमोदामृतपूरितेन हर्षाश्रूणि विमुञ्चता सुषेण !" इत्यपि ॥

मिव मुञ्चता स्निग्धधवलपक्ष्मलचलन्नयनयुगलेन **'सुषेण! कुशलं** तव' इत्यप्रच्छि। तेनोक्तम्—'देवचरणयुगलदर्शनेनापि साम्प्रतं मम क्षेमम्' इति। नृपेणोक्तम्—'मालवनरेश्वरेण सह भवतां को वृत्तान्तः समभूत्?।' ततः **सुषेणः** प्रोवाच—'देवपादानामादेशेन तदा चतुरङ्गबलेन मालवपतिना समं संग्रामः समजनि। तावद्देवप्रतापेन प्रसर्पता मत्सैन्येन रिपुबलं भग्नम्। सैनिकैस्तदीयं सर्वस्वमपि स्वीचक्रे। तस्यान्तःस्थितोऽबालचरितो बाल एकः पञ्चवर्षदेशीयस्तन्नृपतिसुतः स्वशक्त्या युध्यमानोऽस्माभिर्गृहीतः। स एष साम्प्रतं द्वारदेशेऽवतिष्ठते।' ततो भूपतेरादेशलेशेन मालवनरेन्द्रनन्दनो **महेन्द्रनामा** स्फुरत्सौभाग्यसुभगः पुण्यलावण्यावयवश्रीश्चम्पककुसुमतनुरतनुगुणग्राममन्दिरं भविष्यन्महागन्धगज इवादीनैर्दृष्टिपातैर्विलोकयन्नास्थानमुपनृपमाजगाम। ततो राज्ञा विलसत्स्नेहनिर्भरहृदा दीर्घतरभुजादण्डाभ्यां गृहीत्वा निजोत्सङ्गे निवेशितः। भूपतिस्तं निरीक्ष्य प्रमुदितमनाः समुद्र इव चन्द्रमसं स्वयं परिरभ्य बभाषे—'अहो! वज्रकठिनमानसोऽस्य जनको योऽद्याप्यस्य वियोगे जीवति।' देव्यपि कुमारं देवकुमारमिव पश्यन्ती पुत्रमिव स्नेहं बिभ्रती जल्पितवतीति—'धन्या सा युवतिर्यस्याः कुक्षौ रोहणगिराविव गुणैरसपत्नं पुत्ररत्नम्। दारुणा सा या सुतविरहे आत्मानं बिभर्ति।' सचिवेश्वरैरुक्तम्—'किं करोत्वेषः? ईदृश एव विधिपरिणामः। तव सुकृतविलसितं चैतत्।' अपि च—

> भवेयुर्न भवेयुर्वा, कस्य कस्यापि भूस्पृशः।
> अतीव स्युः पुनः पुण्यवशतः सर्वतः श्रियः॥ १॥

अत्रान्तरे स चाभ्यन्तरगुरुदुःखज्वलनज्वालावलीतप्तचित्तो बाष्पा-

श्रुभी रोदितुं प्रवृत्तः । ततस्तस्य महीभृतः ससंभ्रमजलतरङ्गास्फालित-शतपत्रमिव समुदितोदयाचलचूलावलम्बिमार्तण्डमण्डलकिरणगणाहृ-तदिवसधूसरशशधरबिम्बमिव दीप्रप्रदीपप्रभापराभूतमालतिप्रसूनमिव बालस्यास्यं पश्यतः किञ्चिच्चित्ते 'महद्दुःखं' इति वदतः प्रसृतबाष्पज-लार्द्रं नयनयुगमभूत् । प्रकृतिकरुणहृदयाया देव्या अपि क्षणमश्रुबि-न्दुसंदोहेन निपतता कुचकलशोत्सङ्गे हारलीलायितमलञ्चक्रे, मन्त्रि-जनस्यापि पतितश्चाश्रुप्रसरः । 'अहो! अतुच्छगुणवत्सल! वत्स! स्वच्छचित्त[1]! मा विषादस्यावकाशी भव' इति जल्पता भूभृता स्वदुकूलाञ्चलेन बालस्य विमलीकृतं वदनकमलम् । ततः परिजनो-पनीतशीतलजलेन कुमारस्य स्वस्य च नयनानि प्रक्षालितानि देव्या मन्त्रिगणेन च । राज्ञा भणितम्—'भो भोः सुरगुरुप्रमुखाः सचिवेश्वराः! भणत, किं कुमारेण ममोत्सङ्गसङ्गिना रुदितम्? ।' तत एकेनोक्तम्—'किमत्र ज्ञेयम्? यत एष खलु बालः पितृमातृ-वियुक्तो विषण्णचित्तः, अत एतेन रुदितम् । अपरेणोक्तम्—'देव! त्वां विलोक्य निजपितरौ हृदि स्थिताविव्यनेन रुदितम् ।' अन्येन च भणितम्—'देव! तथा अस्मिन् समये सम्यग् न ज्ञायते यदस्य बालस्य पितरौ किमवस्थान्तरमनुभवतः?, अतोऽनेन दुःखेन रुदि-तम् ।' राजाऽपि जजल्प—'किमत्र विचारेण? इममेव पृच्छामः ।' भणितश्च भूपतिना—'पुत्र! महेन्द्रकुमार! कथय कथं त्वयाऽश्रु-पातः कृतः? ।' ततः कुमारेण किञ्चित्सगद्गदं गम्भीरमधुराक्षरं भणि-तम्—'पश्यत विधिविलसितम्; यत्तादृशस्यापि तातस्य पुरन्दरस-मविक्रमस्य राज्यभ्रंशः समभवत्, तथाऽहं च शत्रुजनस्योत्सङ्गसंगतः

---

१ ग–"स्वस्थचित्त" इत्यपि ॥

शोचनीयतामगमम्, ततो मयाऽनेन मन्युना बाष्पप्रसरो रोद्धुं न शक्यते ।' अथो भूभृता तद्वक्त्रनिर्गतवाक्यविस्मयाबद्धरसाक्षिप्यमाणमनसा भणितम्—'अहो! बालस्यामानोऽभिमानः, अहो! सावष्टम्भत्वम्, अहो! वचनविन्यासः, अहो! स्फुटाक्षरालापत्वम्, अहो! कार्याकार्यविचारणं चेति सर्वथा विस्मयनीयमेतत् । यदेतस्यामप्यवस्थायामीदृश एव बुद्धिविभवः ।' इति जल्पता भूभृता वीक्षितानि सचिवेशाननानि । मन्त्रिभिरुक्तम्—'देव! कोऽत्र विस्मयः? । यथा गुञ्जाफलप्रमाणोऽपि ज्वलनो दहनस्वभावः, सिद्धार्थमात्रोऽपि रत्नविशेषो गुरुरेव, तथैते महावंशप्रसूता राजपुत्राः सत्त्वपौरुषमानप्रभवैर्गुणविभवैः सह संवर्द्धितदेहा एव भवन्ति । अन्यत्, देव! नैते प्रकृतिपुरुषाः, किन्तु देवत्वच्युताः सावशेषशुभकर्माणोऽत्र जायन्ते ।' ततो महीभृता जल्पितम्—'एवमेवैतत्, नात्र संदेहः' इति । भणितश्च सानुनयं कुमारः—'वत्स! मा चिन्ताचान्तमना भव । यथाऽहं भवतां रिपुस्तत्सत्यम्, न पुनः साम्प्रतम् । यदा त्वमस्मन्मन्दिरे समागतस्तदाप्रभृत्येव त्वद्दर्शनमात्रेणापि स त्वत्पिता नृपतिर्मित्रं जातः । भवान् मम पुत्र एव । एवं परिज्ञायाऽधृतिं मा कार्षीः । मुञ्च प्रतिपक्षबुद्धिम् । अभिरमस्व वत्स! स्वेच्छयाऽऽत्मनो निकेतने यथा, सर्वमेव भव्यं भावि' इति भणित्वा नृदेवेन कुमारस्य वक्षःस्थले स्वकण्ठकन्दलादुत्तार्य निर्मलमुक्ताफलहारो निक्षिप्तः, दत्तानि च क्रमुकीफलफालीकलितनागवल्लीदलानि । तेन 'महाप्रसादः' इति भणित्वा तत्सर्वं स्वीचक्रे । अर्पितश्च देवगुरोः सचिवाधीशस्य भणितश्च—'तथा त्वयैव उपचरितव्यो

---

. ग-"गुणविशेषैः सह सवर्त्तित-" ॥

यथा कदाचन सौवपित्रोर्न स्मरति । सर्वथा तथा कर्तव्यं यथा ममापुत्रस्यैष पुत्रो भवति' इति । ततः किञ्चित्कालं स्थित्वा राजा भद्रासनात्समुत्तस्थौ । कृतदिवसव्यापारस्य तस्यातिक्रान्तो वासरः ।

अथान्यदिवसे बाह्यास्थानमण्डपमुपगतस्य दृप्तनरेन्द्रमण्डलीपरिगतस्य तस्य भूपतेः सुरगिरेरिव कुलशैलमध्यगतस्यागता धौतधवलदुकूलयुगलनिवसना मङ्गलग्रीवासूत्रमात्राभरणशोभमाना **सुमङ्गला** नामान्तःपुरमहत्तरा, दृष्टा च राज्ञा प्रौढराजहंसीव ललितगतिमार्गा । सा च कञ्चुकिनी नृपतेर्दक्षिणकर्णे किञ्चिन्निवेद्य निर्गतवती । ततो भूधवः स्वयमनल्पविकल्पसंकल्पदोलायमानहृदयः क्षणमास्थाने स्थित्वा विसर्जिताशेषसेवकलोकः कण्ठीरवपीठादुत्थितवान् । **प्रियङ्गुश्यामा**भवनं प्रति प्रचलताऽचलापतिना चिन्तितम्—'अहो! **सुमङ्गलया** कथितं यदद्य देव्या बहुधा विविधभङ्गीभिर्भणितयाऽपि परिजनेनालङ्कारोऽपि न कलयाञ्चक्रे आहारोऽपि न, केवलममानो मान एवावलम्बितः । किं पुनर्देव्याः कोपकारणम्? । अथवा स्वयमेव चिन्तयामि, यतः स्त्रीणां स्वभावत एव पञ्चभिः कारणैः कोपः समुत्पद्यते । तद्यथा—प्रणयस्खलनेन १, गोत्रस्खलनेन २, अविनीतपरिजनेन ३, प्रतिपक्षकलहेन ४, श्वश्रूसंतर्जनेन ५ । तत्र तावत् प्रणयस्खलनं न, येन मम जीवितस्याप्येषैव स्वामिनी तिष्ठत्वन्यस्येति । अथ गोत्रस्खलनमपि न, येनास्याश्चैवाह्वया सकलान्तःपुरपुरन्ध्रीजनमपि व्याहरामि । अथ परिजनोऽपि कदाचन ममाज्ञालोपी भवति न पुनर्देव्याः । प्रतिपक्षस्खलनमपि न, येन सर्वोऽप्यन्तःपुरजनो देवतामिव देवीं मन्यते । शेषं श्वश्रूभण्डनं दूरत एव न, येनास्माकं माता महामहीपतेरग्रेऽग्निमाविश्य

देवी मृतेति । ततः किं पुनरेतद्भवेत् ?' इति चिन्तयन् भूपतिर्देव्या वासवेश्म प्रविवेश । न पुनस्तस्य सा लोचनगोचरतां जगाम । नृदेवेन पृष्टा चेटिका काऽपि—'कुत्र देवी ?' इति । तया निवेदितम्—'देव ! देवी कोपौकसि प्रविष्टा ।' तत्र भूमीविभुर्ययौ । दृष्टाऽनेन देवी हस्तिनोन्मूलितेव कमलिनी, भग्नेव वनलता, प्रोत्क्षिप्तेव कुसुममञ्जरी । ततस्तां प्रेक्षमाणः क्षितिपतिस्तस्याः सविधवर्ती बभूव । तत आसनात्सविनयमलसायमाना चारुलोचना समुत्तस्थौ, निजमासनमदाच्च । उपविष्टो राजा देवी च । ततः पृथ्वीपतिरुवाच—'प्रिये ! कोपने ! किमेतदकारणे चैव शरत्समयवारिधाराहतसरोजमिवोद्वहसि वदनाम्बुजम् ? । नाहं किञ्चिदपराधं स्वस्यान्यस्य वा स्मरामीति । ततो मनः प्रसन्नतामानीय निवेदय । किं मया न तव सम्मानितो बन्धुजनः ?, किं वा न पूजितो गुरुजनः ?, किं वा न संतोषितः प्रणयिवर्गः ?, अथवा न विनीतः परिजनः ?, अथ प्रतिकूलः सपत्नीसार्थः ?, येन कोपमवलम्ब्य स्थिताऽसि ।' ततस्तद्वचः श्रुत्वा किञ्चित्सहास्यमास्यं निर्माय देवी सुधामुचं वाचमुवाच—'देव ! तव पदपद्मयुग्मप्रसादवशतः किञ्चिदपि न न्यूनमस्ति, किन्त्वनेकभूमिनायकमौलिमुकुटमाणिक्यकोटिनिघृष्टचरणयुगस्याऽपि तव प्रणयिनी भूत्वाऽत्र वीक्षापन्ना जाताऽस्मि । यादृशस्तस्यास्तरलदृशः पुण्यवत्यास्तनूद्भवः स्नेहभाजनं महेन्द्रकुमारस्तादृशो मम मन्दभाग्यायास्त्वयि नाथे सत्यपि नास्तीत्येतद्भावयन्त्याः स्वस्योपरि निर्वेदः तवोपरि च मम कोपः समजायत' इति । ततो विस्मयस्मेरचेतसा नीतिप्रचेतसा विशामीशेन चिन्तितम्—'पश्यताविवेकित्वं महिला-

---

१ ग–"अपरस्य" इत्यपि ॥

जनस्य यदलीकासंबद्धप्रलपितैरीदृशैर्ह्रियन्ते कामिनीभिः कामुकजनस्य चेतांसि ।' ध्यात्वेत्युक्तम्—'देवि ! यदेतत्तव कोपकारणमत्र क उपायः? दैवायत्तमेतत्, नात्र पुरुषकारस्यावसरो नान्यस्य चेति। यतः—

अनुद्यमाय कुप्यन्ति, स्वजनाय कुबुद्धयः ।
दैवायत्ताः पुनः सर्वाः, सिद्धयो नेति जानते ॥ १ ॥

तावदेवंविधे व्यवस्थिते कथमकारणे कोपमवलम्बसे ? ।' देव्या विज्ञप्तम्—'नाथ ! नाहमकार्ये कुपिता, किन्तु कार्य एव । किं यदि महीपतिरुद्यमं विधाय देवतामाराध्य संततिं याचते ततः कथं मनोरथाः प्रमाणकोटिं नाटीकन्ते ?, अतः प्रसीदतु मम मन्दभागिन्याः स्वामी देवताऽऽराधनेन' इत्युक्त्वा चरणकमलयुगले निपतन्ती राज्ञा भुजाभ्यां धृत्वा प्रोक्ता—'कान्ते ! यत्त्वं वदसि तदवश्यं विधास्ये । सर्वथैवाधृतिं मुञ्च । परित्यज संतापं । कुरु भोजनं । भज पञ्चगोचरसंभवं सुखम् । प्रिये ! निशितासिधारया त्रिनयनस्य[1] पुरो हुत्वा स्वमांसं, कात्यायन्या अग्रतः शिरसा बलिं दत्त्वा वा, महाश्मशाने भूतप्रेतपिशाचादिकं कमपि साधयित्वा, विद्यया वा पुरन्दरमपि समाराध्य मया तनुजो याचनीय एव' इति भूपवचनं समाकर्ण्य हर्षप्रकर्षप्रवृत्तसर्वाङ्गरोमोद्गमा प्रोत्फुल्लवदनाम्बुजा देवी समजनि । ततो नृपतिरुत्थाय कृतमज्जनभोजनविधिर्विधिज्ञं मन्त्रिगणं समादिदेश—'भो भोः सुरगुरुप्रमुखाः सचिवाः ! अद्येदृशो वृत्तान्तः समभूत्' । देव्याः कोपकारणमात्मनः प्रतिज्ञारोहणं च कथयामास । मन्त्रिभिरुक्तम्—'देव ! यतः—

---

१ ग–"त्रिनेत्रस्य" इत्यपि ॥

अङ्गणवेदी वसुधा, कुल्या जलधिः स्थली च पातालम् ।
वल्मीकश्च सुमेरुः, कृतप्रतिज्ञस्य धीरस्य ॥ १ ॥

तथा—

पराक्रमवतां नृणां, पर्वतोऽपि तृणायते ।
ओजोविवर्जितानां तु, तृणमप्यचलायते ॥ १ ॥

ततो देव! यत्त्वया चिन्तितं तत्तथैव । सुन्दरश्चैष ईदृशो देवस्याध्यवसायः । यतो भणितं पूर्वमुनिभिर्लोकशास्त्रेषु । यथा—

अपुत्रस्य गतिर्नास्ति, स्वर्गो नैव च नैव च ।
तस्मात् पुत्रमुखं दृष्ट्वा, पश्चाद्धर्मं समाचरेत् ॥ १ ॥

अन्यच्च, देव! सर्वाण्यपि कार्याणि पिण्डपानीयप्रदानादीनि पुत्रं विना न संपद्यते पुरुषाणाम् । भण्यते च—

विद्यावतोऽपि नो यस्य, सूनुरन्यूनविक्रमः ।
वृथा तज्जन्म शाखीव, पुष्पैराढ्योऽपि निष्फलः ॥ १ ॥

तेन प्रधान एष स्वामिनः पराक्रमः । देव! तिष्ठन्तु सर्वेऽप्येते शशिशेखरोपास्तिमहामांसविक्रयकात्यायन्याराधनप्रमुखाः प्राणसंशयकारिणः सुतप्राप्त्युपायाः । समस्ति स्वस्तिकारिणी महाराजवंशप्रसूतपूर्वपुरुषसान्निध्याध्यासिनी राज्यलक्ष्मीर्भगवती कुलदेवता । तामाराध्यामाराध्य पुत्रवरं प्रार्थयस्व' इति । ततो राज्ञा जल्पितम्—'साधु मन्त्रिपुङ्गवाः' इति प्रोच्य भूपतिरासनादुत्तस्थौ मन्त्रिगणश्च ।

अन्येद्युः स पार्थिवः स्वयं पुष्यनक्षत्रयुतायां भूतेष्टायामशेषत्रिकचतुष्कादिषु रुद्रादीन् देवानभ्यर्च्य यक्षराक्षसादिभ्यो देवेभ्यो बलिं दत्त्वा दुःस्थितान्धककार्पटिकादीननुकम्प्य निर्मितस्नानक्रियः प्रावृत-

धौतधवलदुकूलयुगलः श्रीखण्डद्रवचर्चिताङ्गः कण्ठकन्दलन्यस्तसुमनोमनोरममालः परिजनधृतकुसुमबलिपटलिकोपचारसारः कमलादेव्यालयं प्रविश्य सपर्यां विरचय्य दर्भसंदर्भितसस्तरे निषण्णः कृताञ्जलिः स्तुतिं पपाठ—

पद्मनाभविभोर्वक्षःपद्मभ्रमरवल्लभे ! ।
विधेहि पुत्रपद्मां मे, पद्मे ! पद्मासनस्थिते ! ॥ १ ॥

ततो नरेश्वरो भक्तिभरनिर्भरहृदयस्त्रिरात्रं जितेन्द्रियः कुशमये सस्तरे स्थितवान् । तुरीयदिने च नृपोऽजातदेवतादर्शनामर्षवशः श्यामलकुटिलललाटपट्टघटितभ्रुकुटीभङ्गभीषणाननो वामेन भुजादण्डेन गृहीत्वा कुन्तलकलापं दक्षिणबाहुधृतखड्गरत्नेन कन्धरायां यावत्प्रहारं दातुमारब्धवान् तावद्देवतया हाहारववाक्यपुरःसरं तस्य स्तम्भितो भुजादण्डः । राजाऽपि यावदुन्नमितास्यः पश्यति तावद्वदनविधुसन्निधानेऽपि विशेषविकचकरकमलपरिमलमिलदलिकुलझङ्कारमुखरितदिक्चक्रवाला कमलालया देवी **राजकमला** प्रत्यक्षीबभूव ।

तद्दर्शनसमुत्पन्नरोमाञ्चकवचो विस्मितवदनारविन्दः कृतप्रणतिः क्षितिपतिरासीत् । **राजलक्ष्म्या** भणितम्—'भो नरेश्वर ! विलक्षीकृतप्रतिपक्षलक्षवनितावैधव्यस्थूललक्षं कृपाणरत्नं ग्रीवायां किमित्यायास्यते ? ।' नृपेणोक्तम् -'देवि ! यत्त्वया त्रिरात्राभ्यन्तरे मम निराहारस्यापि न निजदर्शनमदायि ।' ततो **राज्यश्रिया** किञ्चिद्विहस्य प्रोक्तम्—'वत्स ! वद मया किं कार्यं तव ? इति ।' अथो निगदितं मेदिनीशेन—'देवि ! प्रसादं विधाय सर्वकलाकलापनिलयः प्राज्यराज्यधुराधरणधौरेयः [१]कुलमन्दिरावष्टम्भस्तम्भनिभः पुत्रः पवित्रगुणशाली

१ ग—"कुलमन्दिरस्तम्भावष्टम्भः पुत्रः प्रदीयताम् । ततः स्मिता" इत्यपि॥

दीयताम् ।' ततः स्मित्वा राज्यकमला समुवाच—'महाराज! किं कोऽपि कदाचन मयि पुत्रो भवता न्यासीकृतोऽस्ति?, येन मां प्रार्थयसे ।' राज्ञोक्तम्—'यद्यपि मया तनुजो न समर्पितस्तदवितथम् । परं कल्पलतासन्निधाने किमु कोऽपि बुभुक्षया विलक्षीक्रियते?[1] । स्वर्गापगापुलिनावस्थानेऽपि किं तृष्णया बाध्यते? । असपत्नचिन्तारत्नप्राप्तावपि किं दौस्थ्येन दूयते? । त्वयि दृष्टायां किं कोऽप्याधिबाधामनुभवति? ।' देव्या उचे—'महाराज! मया परिहासः कृतः । सर्वगुणसंपूर्णः पूर्णिमाचन्द्र इव कलाकलापनिलयस्तवैकः पुत्रो भावी' इति भणित्वा राज्यलक्ष्मीस्तिरोदधे ।

ततो नृपतिर्लब्धराज्यश्रीप्रसादः श्रीदेवीगृहान्निर्गत्य निर्मितस्नानभोजनः सभायामुपविश्य मन्त्रिमण्डलमाकार्य च यथावृत्तं निवेदयामास ।' मन्त्रिभिर्जल्पितम्—'देवगुरुप्रसादाद्भवत्वेतत् ।' ततः क्षमापरिवृढो दृढधर्मा दृढप्रतिज्ञ आस्थानादुत्थाय देव्यै वृत्तान्तमचीकथत् । देव्यपि हृष्टमानसा समजनिष्ट । राज्ञा समग्रेऽपि नगरे वर्धापनमहोत्सवश्चक्रे । इतश्च घर्मांशुरपि करनिकरप्रसरेण तमःसमूहं निराकृत्यास्तसमस्तकिरणदण्डोऽस्ताचलचूलावलम्बी बभूव ।

सति प्रभापतावग्रे, न प्रभा तनयस्य मे ।
इति ध्यात्वाऽस्तदम्भेन, रविर्ग्रस्तः सरस्वता ॥ १ ॥
विना जीवितनाथं तं, किमन्यैरवलोकितैः ।
इतीव नलिनी जज्ञे, निद्राणनलिनेक्षणा ॥ २ ॥
तदाऽन्धकारं समभूद्भैरवादपि भैरवम् ।
यत्र वर्णश्रियां लोपो, ज्ञायते स्वः परश्च न ॥ ३ ॥

---

1 ग–"विलक्ष्मीक्रियते" इत्यपि ॥

ततः शय्यागृहान्तर्धौतधवलपटप्रच्छादिते मन्दाकिनीपुलिनतलिने तलिनोदरी प्रियङ्गुश्यामा देवी समाराधितदेवगुरुचरणकमला प्रमीलामीलितचारुलोचना पाश्चात्ययामिनीयामे स्वप्ने ज्योत्स्नाप्रवाहसंभृतदिक्चक्रममन्दकुमुदानन्दप्रदं कलङ्कविकलं बहलपरिमलाकर्षितालिकुलकलितया कुवलयमालया परिवृतं कलाभृतमद्राक्षीत्। तावत्प्राभातिकप्रहतमङ्गलमृदङ्गसङ्गतसंरावेण प्रबुद्धा। ततः स्वभावानुसदृशस्वप्नदर्शनरसवशप्रहर्षसमुच्छलद्रोमाञ्चकवचितया देव्या विनयावनतोत्तमाङ्गया यथादृष्टः स्पष्टः स्वप्नः क्षितिभर्तुः पुरो न्यवेदि। राजा तद्वाक्यमाकर्ण्य विस्मयस्मेरमनाः सुधासागरान्तस्थमिवात्मानं मन्यमानः प्रोवाच—'प्रिये! यो राज्यलक्ष्म्या पुत्रवरः प्रदत्तः स साम्प्रतं फलिष्यति।' ततो देवी 'देवतानामनुग्रहेण राज्यश्रियो वरप्रभावेन गुणगुरूणां गुरूणामाशीर्वादेन च वाञ्छितं भवतु' इति जल्पन्ती कवीनामप्यगोचरं प्रमोदं प्रतिपेदे।

अथो महीनेता कृतावश्यकः[1] प्रभाते सचिवैः समं सभामुपविश्य स्वप्नपाठकानाहूय तेभ्यः स्वप्नफलं पप्रच्छ—'कोऽमुष्य फलविपाकः।' ततः स्वप्नपाठकैरुक्तम्—'यथा किल महाराज! महापुरुषजनन्यः शशिसूर्यवृषभहरिगजप्रभृतीन् स्वप्नान् पश्यन्ति। तेन[2] तस्येदृशस्य सकलकलाभृद्दर्शनस्य प्रधानपुरुषजन्म सूच्यते।' राज्ञा भणितम्—'देव्याः पुत्रजन्मफलं राज्यश्रिया वरेणैव निवेदितम्। यः पुनः शशी कुवलयमालया कलितस्तद्वयं पृच्छामः।' ततो गदितं

---

१ क-ख-"कः समस्तसचिवाधीशैरलंकृतां स्वप्नपाठकैरन्वितां राजहंस इव सरसीं सभामलंकृत्य देव्या दृष्टं स्वप्नं निवेद्येति पप्रच्छ" इति पाठः॥ २ ग-"ततोऽनेन स्वप्नेन प्रधा-" इत्यपि पाठः।

स्वप्नकोविदैः—'देव! नूनमेषा तव दुहिता भविष्यति' इति। अथ देवगुरुमन्त्रिणा भणितम्—'देव! युज्यत एतत्। यदि कुवलयमालैव चन्द्रतो विभिन्ना भवति ततः संभाव्यत एतत्। एषा पुनस्तमेव मृगाङ्कमवगृह्य स्थिता। तेनैषा काप्येतस्य राजपुत्रस्य पूर्वजन्मस्नेहप्रतिबद्धा कुवलयमालेव सर्वजनमनोहरा प्रियतमा भाविनी' इति। भणितं भूपेन—'संगतमेतत्।' ततः किञ्चित्कालं विद्वद्गोष्ठ्यामुपविश्य विशांपतिर्दिवसकृत्यकृते कृत्यवेदी समुदतिष्ठत्।

अथ देवी तद्दिनमारभ्य लावण्यपुण्यावयवा परिजनस्य बहुमता साधुजनस्यानुकूला सर्वप्राणिगणे सानुकम्पा संपूरितदोहदसौहृदा सामोदा गर्भं द्यौरिवोद्वहन्ती विरराज।

अथ कियति काले व्यतीते तिथिकरणनक्षत्रसुन्दरे वासरे शुभे लग्ने होरायामूर्द्धमुख्यामुच्चस्थानस्थिते ग्रहचक्रे वृद्धाङ्गनाभिरनेकाभिः सततं रक्षाभिरुपचर्यमाणा, ताम्रपर्णीव मौक्तिकम्, रोहणभूरिव रत्नम्, वैडूर्यभूमिरिव वैडूर्यम्, प्राचीव चित्रभानुम्, मलयाचलाचलेव चन्दनपादपम्, वारिधिवेलेव विधुम्, राजहंसीव विशदच्छदम्, प्रभापहृतप्रदीपप्रभम्, विकस्वरवदनकमलम्, कुवलयदललोचनयुगलम्, सा पवित्रं पुत्रमसूत।

ततो देव्यनुजीविन्यो, हर्षोत्फुल्लदृशो भृशम्।
अहंपूर्विकया श्रीमद्दृढधर्मान्तिकं ययुः॥ १॥
वर्ध्यसे[1] सुतरत्नस्य, जन्मना देव! सम्प्रति।
इत्युक्त्वा भूपतिस्तासामभूत् प्रमोदमेदुरः॥ २॥

---

१ ग-"वर्ध्यते" इत्यपि॥

दृढधर्मा महीपालस्तदा दानमदान्मुदा ।
तथा ताभ्यो यथा तासां, दारिद्र्येऽभूद्दरिद्रता ॥ ३ ॥
यथा प्राप्य निधिं कोऽपि, भवेद्धर्षप्रकर्षभाक् ।
तथा तदा तनूजन्मजन्म भूपतिरप्यभूत् ॥ ४ ॥
भूपः प्रवर्तयामास, निःसामान्यं महोत्सवम् ।
महार्हामर्हतामर्हां, कारयामास च स्वयम् ॥ ५ ॥
तन्मात्रा युवतीजातिस्तथोत्कर्षमनीयत ।
यथा दूर्वां नरेशोऽपि, शिरसा तृणमप्यधात् ॥ ६ ॥
पण्डितान् पूजयामास, बालकांश्च नराधिपः ।
पाठकोलाहलोत्तालान्, वहतः सूतिमातृकाः ॥ ७ ॥
प्रीणयन्नर्थिनां सार्थमर्थैर्भुजबलार्जितैः ।
सूनोर्जन्मोत्सवं चारु, चकार पुरि भूपतिः ॥ ८ ॥

ततो राजा वर्यं मौहूर्तिकं समाकार्य सम्मान्य पप्रच्छ—'हंहो! साँव्वत्सरिक! कथय कुमारस्य जन्मनक्षत्रग्रहाणां फलम् ।' दैवज्ञेन निवेदितम्—'देव! शृणु । आनन्दः संवत्सरः । ऋतुः शरत्समयः । मासः कार्तिकः । तिथिर्विजया । वारो बुधः । नक्षत्रं हस्तः । राशिः कन्या । योगः सुकर्मा । सौम्यग्रहनिरीक्षितं लग्नम् । संपूर्णबलाः सर्वेऽपि ग्रहाः सौम्याः, एकादशस्थानस्थिताः पापग्रहाः । अपि च—

वीक्षितेऽत्र ग्रहैः सौम्यैर्मुहूर्ते स्फूर्तिशालिनि ।
चक्री वा चक्रितुल्यश्च, सुतो जातो भवेदसौ ॥ १ ॥'

नृपेणोक्तम्—'गणक? कति राशयः? के वा राशिगुणाः? ।' निवेदितं निमित्तविदा—'देव! अवधारय, तद्यथा—

**मेषो वृषाख्यो मिथुनश्च कर्कटः, सिंहश्च कन्या च तुला च वृश्चिकः।**
**धनुः प्रवीणैर्मकरश्च कीर्तितः, कुम्भश्च मीनः कथिताश्च राशयः॥ १॥**

साम्प्रतमेतेषु राशिषु जातस्य पुरुषस्य महिलाया वा गुणगण आकर्ण्यताम्—

शूरः कृतज्ञो [1]दीर्घायुश्चण्डकर्मा पुनर्मृदुः।
लोलचक्षुः प्रियः स्त्रीणां, मेषजातो भवेन्नरः॥ १॥
सत्यवादी शुचिर्दक्षो, भोगी त्यागी मनोरमः।
सुमित्रश्चारुगमनो, वृषे जातो भवेन्नरः॥ २॥
चलचक्षुश्च मिष्टान्नो, मैथुनासक्तमानसः।
कर्णरोगी धनेनाढ्यो, जायते मिथुने नरः॥ ३॥
शूरः कृतज्ञो द्रव्याढ्यः, कृशाङ्गो गुरुवत्सलः।
कोपनोऽत्यन्तदुःखार्तः, कर्के जातो [3]भवेत्पुमान्॥ ४॥
अभिमानी क्षमाशीलो, जननीजनकप्रियः।
मद्यमांसरतो नित्यं, सिंहजातो [2]भवेन्नरः॥ ५॥
वृद्धभावे च धर्मार्थी, सर्वलोकमतो धनी।
कामिनीहृदयानन्दी, कन्याजातो भवेन्नरः॥ ६॥
ईर्ष्यालुर्मित्रवात्सल्यपरो दुःखनिकेतनम्।
स्फुटवाक्यो विरागी च, तुलाजातो भवेन्नरः॥ ७॥
क्रूरः शूरः पिङ्गलाक्षो, दर्पिष्ठो निष्ठुराशयः।
धनी वियोगी पितृभ्यां, वृश्चिके स्यान्नरः सदा॥ ८॥

---

१ क-ख-"दीर्घोदश्च-" इत्यपि॥ २ ग-"भवेभरः" इत्यपि। ३ ग-"भवेत्मान्" इत्यपि॥

मेधावी सत्यभाषी च, सर्वलोकमनोहरः ।
वर्यभार्यः सुतेजस्वी, धनुर्जातो भवेन्नरः ॥ ९ ॥
दर्शनीयः सुधीर्विद्वान्, पुत्रवान् दीर्घजीवितः ।
परदारपरस्त्यागी, मकरे जायते नरः ॥ १० ॥
लोलदृष्टिर्गजाऽऽद्यासनो मानी विचक्षणः ।
पराक्रमी च तन्द्रालुर्जातः कुम्भे भवेत् पुमान् ॥ ११ ॥
शूरः समुद्रगम्भीरः, स्पष्टवाक्यस्तु कोपनः ।
युद्धप्रधानो गर्विष्ठो, मीनजातो भवेन्नरः ॥ १२ ॥'

राजाऽप्येतदाकर्ण्य निमित्तविदो रूपकाणां सहस्रं प्रदाय समुत्तस्थौ । ततः प्रमुदितमना भूपतिर्द्वादशदिने समग्रमपि जनं सम्भाव्य वासोभिः स्वप्नदृष्टकुवलयमालावृतचन्द्रदर्शनानुसारेण तनुजस्य द्विधाऽपि कुवलयचन्द्र इत्याख्यां वितीर्णवान्, अपरमभिधेयं श्रीदत्त इति । एवं पञ्चभिर्धात्रीभिः परिपाल्यमानः समितिभिर्यतिधर्म इव कलाकलापेन प्रतिपच्चन्द्र इव, पितुर्मनोरथ इव प्रवर्धमानः, सहस्रकर इव दिग्वधूसङ्गसंगतः, सर्वैरपि करतलात्करतलं संचार्यमाणोऽतितृषितैरिवाशेषजनलोचनैः पीयमानः सुधामय इव निर्मितः प्रजापतिनाऽष्टवर्षदेशीयः । समुद्रादप इव कुम्भभूः दिनकरनिशाकरकरनिकरास्पृष्टे परिजनेनाप्यदृश्यमानेऽमिलितगुरुजने विद्यागृहे यतिरिव जितेन्द्रियः, भोजनास्वादेऽप्यकृतादरः, अनुकूलदुकूलयुगलपरिधानेऽप्यदत्तावधानः, तिरस्कृतसुरासुरगुरुधिया कुशाग्रसब्रह्मचारिण्या मेधया द्वादशवर्षाणि यावत् कलाचार्यपार्श्वोन्न्यासीकृता इव कलाश्यालिकलाविमलाः सकला अपि कला हेलया कलयामासिवान् ।

अन्यदा च स कुमारः स्फाराकारः परिलसद्विक्रमाधारः कृतम-

ज्जनभोजनोपचारश्चन्दनानुलिप्तः प्रावृतैकक्षौमयुग्मः कण्ठनिक्षिप्तसुमनःस्रक् स्वसदृशप्रसाधनप्रसाधितोपाध्यायपृष्ठलग्नः पितुः पदपद्मयुग्मं नमस्कर्तुमुपागमत्। राजाऽपि तं विलोक्य सकललोकलोचनरोचनाकारं भास्वन्तमिव कमलखण्डो राकाशशाङ्कमिव रत्नाकरः स्मेरमनाः समभूत्। कुमारेण सविनयं प्रणतः क्षितिपः तमुत्सङ्गे निवेश्य प्रोचिवान्—'उपाध्याय! कुमारेण तत्रभवतो भवतः सकलोऽपि कलाकलापः स्वीचक्रे? ।' ततः कलाचार्येणोक्तम्—'देव! कुमारेण मत्सकाशात्काश्चिदपि कला न गृहीताः। किन्तु कुमारो मेधानिधिः सकलाभिः कलाभिश्चिरादुत्कण्ठितचेतोभिः वधूभिरिव वल्लभः प्रावृषि नदीभिरिवादीनाभिर्नदीनः स्वयं स्वीकृतः।' अथ नृपेणोपाध्यायं विधिना संभूष्य प्रोक्तम्—'वत्स! तवातुच्छदुःसहविरहदहनसमुत्थचिन्ताधूमध्यामा यथार्थाभिधाना प्रियङ्गुश्यामा समजनि जननी ते, तत्तां प्रणम।' एवं समादिष्टः पुत्रः 'देवो यथा समादिशति' इति वदन् भूपतेरुत्सङ्गात्समुत्थाय जननीं तदात्वविलोकनामन्दानन्दबाष्पभरप्लुतलोचनां समीपीभूय सविनयमाननाम। निःशेषमङ्गलोपचारं कृत्वा सुतं शिरसि चुम्बित्वा स्नेहेन देवगुरूणां सतीनां मातृणां प्रभावेन पितरमनुहरस्व' इति यावदाशीर्वादं दत्ते देवी तावत्त्वरितमागत्य प्रणिपत्य च जनयित्रीं प्रतिहारी प्रोवाच—'देवि! स्वामी स्वयमद्य वाहकेलिं कर्तेत्यतः प्रेष्यतां कुमारः।' ततो मात्रा स विसर्जितः क्षितिपसमीपमुपाजगाम। वसुधाधवेनोक्तम्—'भो महासाधनिक! गरुडवाहनं तुरङ्गममुपनय महेन्द्रकुमारस्य। तथा

१ क-ख-"इति जल्पितवती यावद्देवी तावत्" इत्यपि पाठः॥

यथाऽहमुत्तमाँस्तुरगानपरेषां राजपुत्राणां नियोजय । ममापि पवनावर्तं तुरङ्गममर्पयेति । अपि च—

रत्ननिर्मितपर्याणं, सौवर्णमुखयन्त्रणम् ।
अर्पयोदधिकल्लोलं, हयं कुवलयेन्दवे ॥ १ ॥'

तावदादेशानन्तरं तेन कुवलयचन्द्रस्य पुरतस्तुरङ्गमः समुपस्थापितः । यश्च कीदृशः? वायुरिव गमनैकदत्तचित्तः, मनोभाव इव क्षणप्राप्तदूरदेशान्तरः, युवतिस्वभाव इव चपलः, विपणिश्रेणिरिव मानयुतः, पण्याङ्गनाप्रेमप्रकर्ष इवानवस्थितचरणचतुष्कः । तं विलोक्य नृपेणोक्तम्—'कुमार ! किञ्चित्तुरङ्गलक्षणविचक्षणोऽप्यसि? । कुमारेण विज्ञप्तम्—'गुरुचरणकमलाराधनेन किञ्चित्परिज्ञातमस्ति ।' भणितं भूपेन—'वाजिनां कति जातयः? किं प्रमाणम्? किं लक्षणमपलक्षणं च?' इति । कुमारेणाभ्यधायि—'नाथ ! अवधार्यताम्—यदश्वानामष्टादश जातयः बोल्लाह–सेराह–कियाहादयः । ते वर्णलाञ्छनविशेषेण भण्यन्ते । अश्वस्योत्कृष्टवयसः प्रमाणम्—

नराङ्गुलानि द्वात्रिंशन्मुखं भालं त्रयोदश ।
अष्टाङ्गुलं शिरः कर्णौ, षडङ्गुलमितौ मतौ ॥ १ ॥

चतुर्विंशत्यङ्गुलानि, हयस्य हृदयं तथा ।
अशीतिश्च समुच्छ्राये, परिधिस्त्रिगुणो भवेत् ॥ २ ॥

एतत्प्रमाणसंयुक्ता, ये भवन्ति तुरङ्गमाः ।
राज्यवृद्धिं महीपस्य, कुर्वन्त्यन्यस्य वाञ्छितम् ॥ ३ ॥

---

१ ग–"गुरुप्रसादेन किं–" इति पाठः ।

**एकः प्रपाणे भाले च, द्वौ द्वौ रन्ध्रापरन्ध्रयोः ।**
**द्वौ द्वौ वक्षसि शीर्षे च, ध्रुवावर्ता हये दश ॥ ४ ॥**
अत ऊर्द्ध्वं गुणैर्न्यूनानन्यूनान् वा हयानिह ।
दुःखातिदुःखदान् प्रोचुरश्वलक्षणदक्षिणाः ॥ ५ ॥'

यावदेतत् कुमारो निवेदयति तावद्भूपेन निगदितम्—'वत्स ! पुनः प्रस्तावान्तरे श्रोष्यामः' इति वदन्नारूढः क्षमापरिवृढः **पवनावर्ते** तुरङ्गे, कुमारोऽप्युदधिकल्लोले, **महेन्द्रोऽपि गरुडवाहने,** अपरा अपि राजपुत्रा अपरेषु तुरङ्गेषु । अपि च—

गजैस्तुरङ्गैरुत्तुङ्गैरनेकैः पदिकैस्तथा ।
विस्तीर्णमपि संकीर्णं, राजद्वारं तदाऽभवत् ॥ १ ॥

ततो धृतसितातपत्रश्चलच्चारुचामरयुगलोपवीज्यमानश्चतुरङ्गचमूचक्रपरिवृतः क्षितिपतिः श्रीपथमवतीर्य च वर्यधैर्यगुणशाली कौतुकायातलोकलोचनप्रमोदमादधानः क्षणेन पुरीपरिसरमवाप्य सकलमपि बलं दूरतो विधाय वाहकेलिं कर्तुं प्रवृत्तः । कुमारोऽपि **धौरितकादि**पञ्चगतिक्रमनिरीक्षणाय स्वमश्वं वाहकेलौ मुमोच । यावज्जयजयारवं जनः करोति तावत्सर्वेषां राजपुत्राणां पश्यतामेव तत्क्षणं बहलतमालदलश्यामलं गगनतलमु**दधिकल्लोलः** समुत्पपात । ततस्तस्य वाजिनो जवेन दक्षिणां दिशं प्रति धावतोऽनुधावन्तीव शाखिनः । यदग्रे निकटीभूताः पदार्थास्तेऽप्यनिकटीभूताः । तत एवं ह्रियमाणेन कुमारेण चिन्तितम्—'अहो ! यदि तावत्तुरगस्ततः कथं नभस्तलमुत्पतितः ? । अथ यदि देवः कोऽपि ततः कथं तुरङ्गत्वं न मुञ्चति ? ।' एवं चिन्तयता कुमारेण परीक्षाकृते यमजिह्वाकरालया क्षुरिकया निर्दयं तार्क्ष्यः कुक्षिप्रदेशे हतः । ततः पतच्छोणितनिवहो वाहः शिथिल-

सर्वाङ्गसंधिमूर्छानिमीलिताक्षः क्षितौ पतितमात्रः 'कुमारापहाराद् पापी' इति भणित्वा तत्कालमेव जीवितव्येन तत्यजे । ततस्तं गतासुं निरीक्ष्य कुमारेण चिन्तितम्–'अहो! विस्मापनीयमेतत्—

यद्यश्वस्तत्कथं देवमार्गगामी न चैष चेत् ।
तुरगस्तदयं किं वा, प्रहारेण हतो मृतः ॥ १ ॥'

अथ तपात्ययसमयसजलजलदगर्जिगम्भीरः कस्यापि शब्दः समभूत् । 'भो निर्मलशशिवंशविभूषण! कुवलयचन्द्रकुमार! समाकर्णय मम वचनम्–'गन्तव्यमस्ति तवाऽद्यापि गव्यूतिमात्रं दक्षिणदिग्विभागे, द्रष्टव्यं चादृष्टपूर्वमिव किमपि ।' इदं च श्रुत्वा चिन्तितं कुमारेण—'अहो! कथं पुनरेतत्, कोऽपि मम गोत्रं नाम च जानाति? । अथवा कोऽप्येष दिव्यो मम शुभायतये दक्षिणाशाभिमुखं मां प्रेरयति निष्कारणकरुणापरत्वेन । अतीन्द्रियज्ञानगोचरतया चालङ्घनीयवचनाः किल देवा मुनयश्च भवन्ति ।' इति ध्यात्वा दक्षिणाभिमुखं गच्छन् गव्यूतमतिक्रम्य कुमारोऽशेषान् दिग्विभागान् यावद्विलोकयति तावदग्रतोऽनेकपर्वतपादपश्वापदलतागुल्मगहनां महाविन्ध्याटवीं ददर्श । या च पाण्डवसेनेवार्जुनालङ्कृता, श्रीरिव महागजेन्द्रसनाथा, महापुरीव तुङ्गशालकलिता । चिन्तितं कुमारेण—'अवश्यं वशीकृतेन्द्रियग्रामः कोप्यत्र महर्षिर्महात्मा दिव्यज्ञानावलोकिताखिलपदार्थसार्थः परिवसति । यत्तस्य भगवत उपशमप्रभावेन विरुद्धानामपि जन्तूनां परस्परमकृत्रिमं प्रेम संजातम्[1] ।' इति चेतसि चिन्तयन् कुमारः कुवलयचन्द्रो यावत्किञ्चि[illegible]मुपसर्पति तावद[illegible]-

---

१ ख–"क्षः 'पापी' इति भणन् क्षितौ पतितमात्रो मृतः । ततः" इत्य[illegible] ॥

तिदूरेऽतिस्निग्धबहलकिसलयविराजमानं बहुद्विजकृतकोलाहलमसंख्य-शाखासंकुलं वटपादपमपश्यत् । तं वीक्ष्य तामेव दिशं प्रति चलितोऽचलापतिपुत्रः, क्रमेण च स वटवृक्षतलमलञ्चकार । ततो यावत्तत्र कुमारोऽस्ति तावत्तस्य तपोनियमशोषिताङ्गस्तेजसा ज्वलन्निव, मूर्तिमानिव धर्मः, उपशमरसराजधानीव, निवास[1] इव चारित्रलक्ष्म्याः, केलिवनमिव सौम्यतायाः, मुनिः कोऽपि महात्मा दिव्यपुरुषमृगेन्द्रयोर्मध्यस्थितश्चक्षुष्पथमायातः । ततस्तेन कुमारेण चिन्तितम्—'यदिमं साधुं सकलत्रैलोक्यवन्दनीयचरणारविन्दयुगलं प्रणिपत्य स्वस्याश्वापहारं पृच्छामि । केन हेतुनाऽहमपहृतः? को वैष तुरङ्गः?' इति चिन्तयन्[2] संप्राप्तः पृथुलशिलापट्टस्थितस्य महर्षेः सन्निकर्षम् । मुनिना प्रोक्तम्—'भो शशिवंशविभूषण! कुवलयचन्द्रकुमार! स्वागतं तव । वत्स! आगच्छ' इति । अथ तेन स्वनामगोत्रकीर्तनविस्मितमानसेन महता विनयेन प्रणतं मुनिपतेः क्रमकमलयुगलम् । भगवता सकलभवभयहारिणा सिद्धिसुखकारिणा धर्मलाभाशीर्वादं लम्भितः कुमारः । ततो मुनिसमीपस्थदिव्यपुरुषेण प्रसारितः ससंभ्रमं सुरपादपकिसलयकोमलो माणिक्यकटकाभरणभूषितो वामेतरः करः । ततो नृपतनुजेन करद्वयेन तस्य पाणितलं गृहीत्वेषद्विनतोत्तमाङ्गेन कृता प्रणतिः । मृगेन्द्रेण च बहलशिथिलकेसरधारिणा उद्वेल्लद्दीर्घतरलाङ्गूलेन प्रशान्तश्रवणद्वयेन स्तोकमुकुलिताक्षेणानुमानितो राजतनयः । कुमारेण हर्षवशविकसन्मुदितान्तरस्नेहया स्निग्धधवलया दृशा हरिर्द-

---

१ ग-"चारित्रलक्ष्मीनिवासमिव" इत्यपि २ ग-"विचिन्त्य संप्राप्तः पृथुलशिलातलस्थस्य महर्षेः समीपम्" इत्यपि ॥

दृशे। उपविष्टश्च नातिदूरे मुनिपस्य। भगवता निगदितम्—
'कुमार! त्वयेति चिन्तितम्—

पृच्छाम्यहं साधुममुं कुतो मे, केनापहारः? क इवात्र हेतुः?।
को वाऽयमश्वस्तदिदं निवेद्यमानं मया विस्तरतः शृणु त्वम् ॥१॥'

इति श्रीपरमानन्दसूरिशिष्यश्रीरत्नप्रभसूरिविरचिते कुवलयमालाकथासंक्षेपे श्रीप्रद्युम्नसूरिशोधिते कुवलयचन्द्रोत्पत्तितुरगापहारसाधुदर्शनकीर्तनो नाम
प्रथमः प्रस्तावः ॥ १ ॥

**लोभदेवो** जगाद–'भवद्भिरहं कथं गृह्ये?।' तैः कैतवेनोक्तम्–'भद्र! धीरो भव, मा विषादं भज, यदस्माकमेष नियोगः–पोतवणिजोऽवस्थां पतितस्य स्वागतं विधीयते' इति। एवंविधं जल्पद्भिस्तैर्लोभदेवो गृहमानीय विनयवामनैर्विष्टरे निवेश्य सवनस्नानं भोजनाच्छादनविधिं विधाय जल्पितः–'भद्र! चेतसि विश्वासं समाश्रय, मा भयस्य भाजनं भव।' तत इत्याकर्ण्य चिन्तितमनेन–'अहो! अयं कीदृगकारणवत्सलो लोकः।' स यावदिति चिन्तयन्नस्ति तावत्तैर्निष्कृपैस्तं बद्ध्वा बाढं शस्त्रेण मांसलप्रदेशं विदार्य मांसमुत्कर्तितं शोणितं च जगृहे। स पुनरौषधयोगेन विलिप्ताङ्गोऽक्षतशरीरो जज्ञे। पुनरपि षड्भिर्मासैरतीतैस्तस्य तदेव कृतम्। पुनरपि स पटुतरशरीरः कृतः। एवमनया रीत्या तस्यास्थिपञ्जरावशेषस्य समुद्रान्तःस्थस्य द्वादशवत्सरी व्यतीयाय। अन्यदा **लोभदेव**स्तत्क्षणोत्कर्तितमांसखण्डः प्रवहच्छोणितलिप्ततनुर्भारण्डपक्षिणोत्क्षिप्तः। तस्य व्योम्नि गच्छतः समुद्रोपरि परेण भारण्डपक्षिणा सह युध्यमानस्य भवितव्यतया चञ्चुपुटस्थितो **लोभदेवः** सागरान्तः पपात। तज्जलेन निर्मितवेदनः सज्जन इव दुर्जनवचसा बहलतरकल्लोलमालाप्रेर्यमाणः समुद्रेणापि मित्रविनाशमहापापकलुषितहृदय इव निष्कासितः। किमपि कूलं संप्राप्य तत्र क्षणमात्रं शीतलमरुता समाश्वासितः काननान्तः संचरन् वटपादपतलं ददर्श। तत्र मरकतमणिकुट्टिमं सुगन्धनानाविधकुसुमसंचयचितं निरीक्ष्य **लोभदेवो** व्यचिन्तयत्–'अहो! किल शास्त्रेषु श्रूयते, यथा देवाः स्वर्गे वसन्ति तन्न ते रम्यारम्यविशेषज्ञाः। अन्यथा कथं लोकत्रयाह्लादकरमिमं प्रदेशं परित्यज्य त्रिदशाः त्रिदशालय-

माश्रयन्ते ? ।' ध्यात्वेति स तत्र न्यग्रोधपादपाधस्तादुपविश्यातीव-तीव्रवेदनार्तश्चिरं दध्यौ–'स को धर्मः ? येन देवा दिव्यभोगधारिणो देवलोके सुखमनुभवन्ति । तत्किं पापमस्ति ? येन नरके नैरयिका मद्दुःखतोऽप्यधिकं दुःखमुद्वहन्ति । ततो मया किं पुनः पापमाचरितं यदेवंविधं दुःखनिकेतनमभवम् ।' इति चिन्तयतो **लोभदेवस्य** चेतसि सहसैव तीक्ष्णशरशल्यमिव रुद्रश्रेष्ठी स्थितः । ततः स चिन्तयामासेति–'अहो ! अस्मादृशां किं जीवितेन ? ।

हतो वयस्यः सर्वस्य, प्रियकारी कलानिधिः ।
श्रेष्ठी रुद्रो मया येन, पापिना द्रव्यलोभतः ॥ १ ॥

तावत्साम्प्रतमपि तत्किमपि तादृशमाचरामि येन प्रियमित्र-वधकलुषितमात्मानं तीर्थभुवि व्यापाद्य सर्वपापविमुक्तो भवामि ।' इति चिन्तयन् **लोभदेवः** क्षणं सुप्तः, प्रबुद्धश्च एकस्यां दिशि कस्यापि मधुराक्षरां गिरमाकर्ण्य चिन्तितमनेन–'अये न संस्कृतं प्राकृतमपभ्रंशं च । इयं तावच्चतुर्थी पैशाचिकीभाषा, तावदाकर्णयामि ।' ततस्तेषां पिशाचानामिति परस्परमुल्लापः प्रवर्त्तते, तावदेकेनोक्तम्–'यदिदं पापापनोदाय तपस्यतां पवनाभोगस्थानं रमणीयम् ।' अपरेणोक्तम्–'इतोऽपि चारुश्चामीकराचलः ।' अन्येन भणितम्–'अस्मादपि तुहिनशिशिरशिलातलस्तुहिनगिरिरेव रमणीयः ।' इतरेणोक्तम्–'एवं मा मा वदत, सर्वपापापहारिणी सुरनिर्झरणी प्रधाना ।' इति निशम्य तां प्रति प्रचलितो **लोभदेवः** परित्यक्तलोभसङ्गः समुपागताभङ्गवैराग्यरङ्गः । क्रमेण च नरेश्वर ! समागत्यात्रैव निविष्टः ।' एवं वृत्तान्तं भगवता कथितमाकर्ण्य व्रीडाप्रमोदविषादपरवशः श्रीधर्मनन्दनगुरुचरणमूलमवाप्य **लोभ**

**देवः** प्रोवाच—'यद्वन्द्यचरणारविन्दैरावेदितं तदवितथमेव । किमत्र मया कर्त्तव्यम् । ततः श्रीधर्मनन्दनमुनिपेन प्रोक्तम्—'वत्स! सर्वथा मित्रवधसंभूतपापजातक्षयाय लोभमहानिशाचरमनीहाहेत्या पञ्चत्वमानीय विनयवामनो भूयसा तपसा पुराकृतकर्ममर्मनिर्मथनाय जैनतपस्यासरस्यां राजहंसलीलामलङ्कुरु । क्षान्तिकान्तासेवाहेवाकितामाश्रय । कायोत्सर्गमुग्रमाचर । पापमहाराजप्राकृतीर्विकृतीः परिहर । यत्र न जरा न मृत्युर्न व्याधिर्न चाधिर्न च दुःखं तच्छाश्वतं महोदयपदं विशदं ततः प्राप्स्यसि ।' तदाकर्ण्य **लोभदेवेनोक्तम्**—'यदि भगवन्! तावदेतस्य चारित्रस्य योग्योऽस्मि ततो मम प्रव्रज्यादानप्रसादं विधेहि ।' भगवता श्रीधर्मनन्दनेन गुरुणा पादपतितस्य तस्य बाष्पजलप्लुतलोचनस्य प्रशान्तलोभस्य **लोभदेवस्य** व्रतमदायि ।

## ॥ इति लोभे लोभदेवकथा ॥ ४ ॥

पुनरपि गुरुरुवाच—

'हन्ति हन्त! महामोहस्तुहिनौघ इवोदितः ।
पङ्केरुहं विवेकाख्यं, यशःपरिमलोर्जितम् ॥ १ ॥
सर्वदुःखमयो भूप!, भव एष जिनैर्मतः ।
तस्य स्वभावं जानन्ति, महामोहहता नहि ॥ २ ॥
भुवोऽवतंसः संजज्ञे, स एवागण्यपुण्यभाक् ।
सदध्वनौ न यः क्वापि, ह्रियते मोहवाजिना ॥ ३ ॥
अनेन मोहराजेन, दुर्धरेण जगत्रयी ।
जिग्ये जिनमुनीन् मुक्त्वा, तीव्रव्रतधुरन्धरान् ॥ ४ ॥

सर्वेदायमहो ! मोहो, महासागरसन्निभः ।
न यस्य प्राप्यते स्ताघो, महावंशैरपि क्वचित् ॥ ५ ॥

महामोहमोहितमनाः पुमान् गम्यागम्यमपि न विचारयति । स्वसारमप्यभिसरति । जनकमपि मारयति । नरेश ! यथैष पुरुषः ।' विज्ञप्तं नृपतिना—'स्वामिन् ! अनेकलोकसंकुलायां सभायां कः पुरुषः ? इति नावैमि ।' तदवगम्य गुरुणा भणितम्—'य एष तव दूरे दक्षिणदेशे वासवस्य वामो लेप्यमय इव कार्याकार्यविचार-विमुखो दृश्यमानसुन्दरावयवः स्थाणुरिव स्थितः ।' एतेन महामोहमोहितचेतनेन यत्कृतं तच्छ्रूयतामिति—

'अस्ति समस्तकुशलजनावृतग्रामाभिरामः **कोशलाभिधो** जनपदः । तत्र परचक्रदुर्लङ्घ्या कामिनीमुखचन्द्रचन्द्रिकात्यन्तधौतधवलगृहा **कोशलाख्या** नगरी ।

स्वर्नदीसङ्गतैर्यत्र, मरुल्लोलैर्ध्वजाञ्चलैः ।
मार्जयन्तीव शशिनः, कलङ्कममरालयाः ॥ १ ॥

रमारामाभिरखिलैः, सुभगंभावुकैर्गुणैः ।
मात्राधिकतया यत्र, पराभूयन्त भूरिशः ॥ २ ॥

वातावधूतप्रासादधवलध्वजवेल्लनैः ।
यत्र त्रिपथगा व्योम्नि, सहस्रपथगाऽभवत् ॥ ३ ॥

तत्र क्षत्रशिरोरत्नं, पवित्रमतिभाजनम् ।
**कोशलः** कुशलः क्षोणीपालः प्रत्यर्थिकोशलः ॥ ४ ॥

वाहिनीप्रसरविस्फुरद्रजोमण्डलेन रविरस्तदीधितिः ।
यस्य विक्रमगुणैकवर्णने, न क्षमः फणभृतामपीश्वरः ॥ ५ ॥

यदश्वीयक्षुण्णक्षितिविततरेण्वा रविरपि,
क्षतज्योतिर्यत्सिन्धुरनिकरदानोदकभरैः ।
प्रसस्रुर्वाहिन्यः प्रतिपथममन्दैः प्रतिरवै-
रहो ! निःश्वासानामजनि किल गर्जिर्जलभृताम् ॥ ६ ॥
यस्य प्रयाणे पृथिवीश्वरस्य, निःश्वासनादाः किल ये प्रसस्रुः ।
त एव विद्वेषिमहीपतीनां, पलायनोत्साहकरा बभूवुः ॥ ७ ॥
यद्यात्रास्वपि दुर्गलङ्घनलसन्निःश्वासनादैः स्फुर-
त्सैन्योद्धूतरजोभरैरविरतं प्रत्यर्थिपृथ्वीभृताम् ।
बाधिर्यं श्रवणेष्वथान्ध्यमभवन्नेत्रेषु तस्य स्तुतिं,
कर्त्तुं न क्षमते सहस्ररसनोऽप्युर्वीभृतो विक्रमे ॥ ८ ॥

अथ तस्य महीशक्रस्य मूर्त्त्या जयन्त इव परं नाकुलीनः, सिंह इव विक्रमी न नखरायुधः, सवितेव प्रकाशकरो न कठोरः, चन्द्र इव सर्वाह्लादकरो न कलङ्कितः, तोसलाख्यः सङ्ख्यावतां मुख्यस्तनूभवः समभवत् । एवंविधविविधगुणसंपूर्णेन तेनानिवारितप्रसरेण निजनगर्यां परिभ्रमता कदाचित्कस्यापि महतो नगरश्रेष्ठिनो हर्म्यरम्यगवाक्षविवरविनिर्गतं धाराधरपटलप्रकटीभूतपूर्णिमाकुमुदबान्धवमिव बालिकाया वदनकमलं कुवलयदलदीर्घलोचनयुगलं ददृशे । सापि तमालोक्य साक्षादिव मनोभवमुद्दामानुरागसागरान्तर्निमग्नमानसा तदात्वमेव समजायत । तद्दर्शनेन तस्यापि चेतः पञ्चशरेण परदारावलोकनेन जनितकोपेनेव तितउरिव पञ्चभिः शरैः शतच्छिद्रं व्यधायि । ततस्तेन निर्दयविषमशरप्रहारप्रसूतवेदनाविवशेनेव दक्षिणकरेण वक्षःस्थलं पस्पृशे, वामेन नाभिपार्श्वे तर्जन्यङ्गुली चोर्द्ध्वीकृता, तया च तन्निरीक्षणपरवशया वामेतरपाणिना

कृपाणप्रतिकृतिः प्रकटिता। ततः कुमारस्तच्चेष्टितमालोक्य स्वावासं प्रति प्रचलितो व्यचिन्तयदिति—

'यस्या मुखेन लावण्यपुण्येन द्विजनायकः।
न्यक्कृतोऽङ्कच्छलात्तुन्दे, चिक्षेप क्षुरिकां निजे॥ १॥
यदास्येन्दूदयादुल्लास लावण्यवारिधिः।
यत्रामृतायितं वाचा, दृष्टिभ्यां शफरीयितम्॥ २॥
प्रवालायितमोष्ठाभ्यां, मुक्तापङ्क्तीयितं द्विजैः।
कूर्मायितं कुचाभ्यां च, दोर्भ्यां वेत्रलतायितम्॥ ३॥
इयं शृङ्गारसर्वस्वं, राजधानी मनोभुवः।
उद्दामयौवनप्राग्रहरा लावण्यदीर्घिका॥ ४॥

अहो! अस्या बालिकायाः सर्वरूपातिशायिरूपं, अहो! अद्भुता कापि सौभाग्यभङ्गी, अहो! विदग्धत्वम्, अहो! निरुपमा लावण्यलक्ष्मीः' इति ध्यायन्नेव निजावासमासदत्। साथ क्रमेण नयनपथातीतेऽपि तस्मिन्नराधीश्वरनन्दने इभ्यतनया विषमबाणबाणप्रहारप्रसरजर्जरशरीरसर्वावयवा मुक्तदीर्घोष्णनिःश्वासधूमध्यामलीकृतशय्यागृहविचित्रचित्तभित्तिः शयनीये लुलोठ।

इष्टं मन्त्रमिव स्वान्ते, स्मरन्ती तं नृपात्मजम्।
सा तस्थौ सुकुमाराङ्गी, कुरङ्गीनयना चिरम्॥ १॥
न शय्यायां न च ज्यायां, न जने न वने रतिः।
तस्या न चन्द्रे नो चन्द्रे, वियोगिन्याः कदाप्यभूत्॥ २॥
शीतांशुरपि घर्मांशुश्चन्दनं च हुताशनः।
निशापि वासरस्तस्याः, वैपरीत्यं तदाभवत्॥ ३॥

यतः—

"योगिनां चन्दनाद्यैर्यैः, शीतैः प्रीतिः प्रजायते ।
तनुर्ज्वलति तैरेव, सततं विप्रयोगिणाम् ॥ १ ॥"

स कुमारो यावदन्यदा तस्या हृदयहारिण्याः सङ्गमोपायतोयेन दुस्सहविरहदहनोत्तप्तदेहनिर्वापणमभिलषन्नस्ति तावत्पर्यस्तकिरणदण्डः चण्डकिरणः पश्चिमाचलचूलिकावलम्बी बभूव । तदाऽतिप्रसृते संतमसे कुसुमशरशरप्रसरव्यथितो 'दुःखेन विना सौख्यं नास्ति' इत्यवगम्य कुमारः समुदतिष्ठत् । ततस्तोसलो निजं वसनं गाढं नियन्त्र्य कुवलयदलश्यामलां यमजिह्वाकरालां क्षुरिकां कटीतटे बद्ध्वा दक्षिणकरे वैरिवीरवारनिशुम्भनं कृपाणरत्नमंसावलम्बितं वसुनन्दकं च कृत्वा रचितनीलपटप्रावरणस्तत्सदनान्तिकमागत्य वियदुत्क्षिप्तकरणं दत्त्वा वातायनमाससाद । निर्मलप्रज्वलद्यष्टिप्रदीप-प्रद्योतितावयवां पराङ्मुखीं शयनतले विनिविष्टां तामेणलोचनामालोकत । कुमारेण पृथिव्यां वसुनन्दकोपरि कृपाणं मुक्त्वा निभृतपदसञ्चारमुपगम्य तस्याः सुदृशो लोचने पाणिभ्यां पिहिते । ततस्तया सर्वाङ्गरोमाञ्चकञ्चुकमुद्वहन्त्या चिन्तितम्—'यदद्य सर्वतो ममाङ्गं पुलकितं बालमृणालिनीदलकोमलं करकिशलयं तज्जाने सैष मत्स्वान्तसर्वस्वतस्करः ।' इति विमृश्य तयाऽभाणि—'अहो ! सौभाग्यनिधे ! मां मुञ्च ।' कुमारेण हसता तन्नयनद्वयी शिथिलीचक्रे । तया तस्य गृहागतस्य विनयवृत्त्याऽभ्युत्थानं विदधे । तया दत्ते प्रधाने [ विष्टरे ] कुमारः समुपाविशत् । कुमारेणोक्तम्—'तव सङ्गममिच्छामि ।' तयोदितम्—'देव ! युक्तमेतत्परं कुलाङ्गनानां केवलं शीलपालनमेव हितम् ।' इत्याकर्ण्य

कुमारेण जल्पितम्—'यद्येवं भवती शीलवती ततो व्रजामि ।' इत्युक्त्वा खड्गरत्नं वसुनन्दकं च स्वीकृत्य ससंभ्रममुत्तस्थौ । तया तं वस्त्राञ्चले धृत्वा प्रोक्तम्—'भद्र! पारिपन्थिक इव मम हृदयं मुषित्वा कुत्र व्रजसि? यतस्त्वां बाहुलतापाशनियमितं करिष्ये ।' इत्याकर्ण्य कुमारः स्थितः। तयोक्तम्—'राजपुत्र! यदत्र परमार्थस्तं तावदाकर्णय पश्चाद्यद्युक्तं तत्कुर्याः ।

अस्त्येतस्यामेव कोशलायां श्रेष्ठी नन्दनाभिधः । तस्य पत्नी रत्नरेखाख्या । तत्कुक्षिसंभवा सुवर्णदेवाभिधाना पित्रोरतीववल्लभा कन्यकाऽस्मि । ततः पितृभ्यामहं विष्णुदत्तपुत्रस्य हरिदत्तस्य पाणिपीडनाय प्रदत्ता । स च मामुपयम्य वाणिज्याय यानपात्रमारुह्य लङ्कापुरीमभिजग्मिवान् । तस्य प्रोषितस्याद्य द्वादशो वत्सरः सातिरेकः । विपन्नो जीवति वेति न ज्ञायते । एतं यौवनमहासागरमपारं काममहावर्त्तगर्त्तदुस्तरं विषयमत्स्यकच्छपोत्कटमतिगहनं निरपवादमुल्लङ्घयन्त्या ममेयन्ति दिनानि जातानि । दुर्जेयतया विषयाणां चञ्चलतया चेन्द्रियग्रामस्यैकदा मम मानसे इति विकल्पसङ्कल्पमाला बभूव—'अहो! जरामृत्युरोगशोकक्लेशप्रचुरे संसारे प्रियसंगमादपरं न किञ्चिच्छर्माऽस्ति, तच्च न विद्यते । ततोऽजागलस्तन इवाऽरण्यमालतीकुसुममिव बधिरकर्णजाप इव निरर्थकं मे जीवितम् ।' इति विचिन्त्य चिरं मरणकृताध्यवसाया 'सुदृष्टं जीवलोकमद्य करोमि' इति यावद्गवाक्षमारूढा तावत्तत्र भवितव्यतया भवान्मम लोचनगोचरं गतः । त्वां दृष्ट्वा रागपरवशा तत्कालमेव जाताऽस्मि । त्वया च परामृष्टं हृदयं, एकाङ्गुलिरूर्द्धीकृता । मया तदवगतं यदेतेन राजपुत्रेण मम संज्ञा कृता । हृदयपरिस्पर्शनेनेति

कथितम्–'यत्त्वं मम हृदयस्याभीष्टतमा।' अङ्गुल्या ऊर्ध्वीकृतया चेति कथितम्–'यदेकदा संगमं ददस्व' इति। ततो मया तव खड्गानुकारी निजकर इति प्रदर्शितः, 'यदा किल त्वं खड्गबलेनैव समागच्छसि तदा तव संगमो नान्यथा' इति। तदा प्रभृति राजपुत्र! तव सङ्गमाशाबद्धमानसा 'कोऽपि मा ज्ञासीत्' इति वेपमाना कृतमरण-निश्चया यावदस्मि तावद्भवान् समायातवान्। ततः साम्प्रतं विनष्टं विज्ञानम्, गलितो गुरुजनविनयः, परिमुषितं विवेकरत्नम्, विस्मृतो धर्मोपदेशो भवत्संगमेन। किञ्च यदि तावत्त्वया सह सङ्गतिं करोमि ततो मम कुलमन्दिरे दुःशीलेत्येषा पराभवः स्वजनानां गुरुतरोऽपवादश्चेति। यदि लोकापवादः सह्यते तदा तव ममापीप्सितं, अन्यथा मृत्युर्वरम्' इतिजल्पन्ती सुदती निशाकरेणैव निशा गाढतरं कुमारेण समालिङ्गिता सफलीकृतयौवना च। प्रीत्या च दिवसे भाविस्वविरहविनोदचिह्नं निजनामाङ्कां मुद्रिकामेकां तस्यै स तदा ददौ। ततोऽलङ्कृतदिग्विभागे सन्ध्यारागे कुमारः सहसा तन्मन्दिरात्तेनैव प्रयोगेण तद्यथागतं गतः। एवं च तस्यानुदिनं प्रतिवसतस्तत्र तया सहाष्टमो मासो व्यतीयाय। तत्र च तथाविधकर्मसंयोगेन भवितव्यतया नियोगेन सा गर्भवती बभूव। तत्सखीजननिवेदितवृत्तान्ताया रत्नरेखाया मुखात् नन्द-श्रेष्ठिना समवगत्य संजातकोपेन कोशलनरेश्वरस्य पुरो न्यवेदि। राज्ञादिष्टम्–'गच्छ गृहेऽन्वेषयामि लम्पटः।' ततो राजादेशमवाप्य मन्त्रिणा सर्वत्र विलोकमानेन तोसलकुमारः प्राप्तः, विज्ञप्तं च राज्ञे। ततो गुरुतरकोपस्फुरदधरेण धराधरेणादिष्टम्–'सचिव! नाहमन्यायिनं पुत्रमपि सेहे, तदेनं द्रुतमेव निगृहाण।'

सचिवो–'यदाज्ञापयति स्वामी' इतिभणित्वा कुमारं केनापि व्याजेन श्मशानभूमिमानिनाय । तत्र कार्याकार्यदक्षिणेन मन्त्रिणोक्तम्–'कुमार ! तव दुर्वृत्तेन तवोपरि कुपितस्ते पिता, भवान् वध्य आज्ञप्तोऽस्ति, स्वामिसुतत्वेन त्वमपि मम प्रभुः कथं त्वां व्यापादयामि ? । सदैवास्मि तव वंशसेवकः ततस्त्वं तथा व्रज यथा तव प्रवृत्तिरपि न श्रूयते । त्वया क्वापि न कथ्यं यदसि **तोसलः ।**' इतिभणित्वा मन्त्रिणा कुमारो विसर्जितः । कुमारोऽपि तदैव निर्गत्य प्रचुराणि पुराण्युल्लङ्घ्य क्रमेण पाटलीपुत्रमगच्छत् । तदा तत्र च राजा **जयवर्मा** राज्यं पालयति स्म । स कुमारस्तत्र तस्य सेवापरोऽभवत् ।

इतश्च तस्यां **कोशलायां** सा **सुवर्णदेवा** ज्ञातदुःशीलत्वेन बन्धुजनेन निन्द्यमाना जनेन च कुमारविरहोद्विग्नमानसा गर्भभव-दुःखभरबाधिता व्यचिन्तयदिति–'स कुत्र राजपुत्रो यो मां परित्यज्य ययौ' इति चिन्तयन्ती सा कस्याश्चित्सखीमुखात्–'तव दोषेण राजादेशतः सचिवेन कुमारो हतः' इति श्रुत्वा सगर्भत्वेना-कृततदनुमरणा निशीथे केनापि च्छद्मना गेहतो निर्गत्य भवितव्यता-योगेन पाटलीपुत्रपुरं प्रति प्रचलता केनचित्सार्थेन सह चचाल । सा सुदती मन्दं मन्दं गच्छन्ती गर्भवेदनार्ता चरणचङ्क्रमणाप्रवीणा पश्चात्सार्थात्परिभ्रष्टा तालहिन्तालतमालकदम्बजम्बूजम्बीरादिफल-दलशतसङ्कुले महाकानने मूढदिग्विभागा अपरिज्ञातनिगमा तृष्णा-तरलितचेतोवृत्तिः क्षुधार्त्ता श्यामवदना पथश्रान्ता सिंहनिनादविद्रुता व्याघ्रदर्शनवेपमानहृदया दुरध्वपतिता विलापानकार्षीदिति–'हा तात ! अहमभीष्टतमाऽपि त्वया परित्राणं न कृतम् । हा मातः !

ममापि त्वया रक्षणं न कृतम् । हा प्रियतम! यस्य तव कृते मया हेलयाऽपि कुलं शीलं यशस्त्रपा सखीजनश्च पटप्रान्तलग्नतृणवद् वेश्मप्रमार्जनोद्धतावस्करवत् सर्वमपि तत्यजे, स त्वमपि मामुपेक्षसे' इति विलपन्ती मूर्च्छिता धरायां पपात। अत्रान्तरे कुमुदिनीविमुक्तां मृतामिवावगत्य दुःखार्त्तो विश्रस्तकरः प्रतीचीजलनिधेरन्तः परिममज्ज । ततो महागजेन्द्रयूथमलिने विन्ध्यगिरिशिखरमालानीले समन्ततः प्रसृते संतमससमूहे शीतलेन वायुना जातानुकम्पेनेव समाश्वासिता सा । ततस्तस्मिन्महाभीमे वने एकाकिनी अशरणा **सुवर्णदेवा** प्रसूता एकं दारकं द्वितीयां दारिकां च। ततश्च ।

सुतजन्ममुदाऽरण्ये, वासार्त्त्या तन्मनः क्षणम् ।
जग्रसेऽहर्मुखमिव, भासा भूच्छाययाऽपि च ॥ १ ॥

सा च प्रलपितुमारेभे ।

पित्रा मात्रा च भर्त्रा च, स्वजनेन च वर्जिता ।
वत्स! त्वमेव शरणं, त्वं गतिस्त्वं मतिर्मम ॥ १ ॥
पिता पाति च कौमारे, यौवने रक्षति प्रियः ।
स्थविरत्वे तनूजस्तु, निर्नाथा स्त्री कदापि न ॥ २ ॥
इतश्चाहर्पतिः प्राप, पूर्वपर्वतमस्तकम् ।
तस्या दुष्टमहाकष्टतिरस्कारकृताविव ॥ ३ ॥
उदितस्तेजसामीशः, कोपाटोपादिवारुणः ।
वर्णलोपकृतो ध्वान्तसङ्घातस्य विघातने ॥ ४ ॥

एवंविधे प्रत्यूषप्रस्तावे चिन्तितमनया—'किमधुना मया कार्यं तावन्मरणं न वरम्, यतो बालयुगलं मयि मृतायां मृतमेव, तदस्य पालनमेव सम्प्रति श्रेयः' इति ध्यात्वा गता कस्यापि ग्रामस्य

परिसरम् । ततस्तोसलराजपुत्रनामाङ्कां मुद्रां बालस्य कण्ठे निक्षिप्य निजनामाङ्कितमुद्रां बालिकायाश्च निजोत्तरीयप्रान्तद्वयेन दारकं दारिकां च पृथग्ग्रन्थौ बबन्ध । तद्बालयुगलं तत्र मुक्त्वा स्वयं **सुवर्णदेवा** शरीरवैवर्ण्यनिराकरणाय विन्ध्याचलोपत्यकानिर्झरण-मुपाजगाम । अत्रान्तरे नवप्रसूता व्याघ्री स्वशिशोर्भक्ष्यार्थं भ्रमन्ती नवशोणितगन्धहृतचित्ता चीवरोभयप्रान्तबद्धं बालयुगलं जग्राह । तस्या व्रजन्त्या वसनान्तबद्धा दारिका पथि पपात, न च तया गलिताऽपि दारिकाऽज्ञायि । तदा च पाटलीपुत्रेशश्री**जयवर्म**-नृपस्यागतः सभार्यस्तत्र दूतः । स तां दारिकां दृष्ट्वा गृहीत्वा च निरपत्यायाः स्वभार्यायाः समर्पयामास । तौ च दम्पती क्रमेण तां पुत्रीमङ्गीकृत्य पाटलीपुत्रमायातौ । ताभ्यां तस्या बालिकाया **वनदत्ते**ति नाम विदधे ।

इतश्च व्याघ्री स्तोकं भूभागमुपेता कुतोऽपि कार्यान्तरात्तत्रायातेन राज्ञः श्री**जयवर्मणो** राजपुत्र**शबरशीलेन** व्याघ्र इतिकृत्वा गुरुतर-शल्यप्रहारेण हता मृता च । तं च बालकं कोमलमृणालदेहं रक्तो-त्पलसमक्रमयुगलं विकस्वरेन्दीवरनयनं पार्वणचन्द्राननं स ददर्श । ततस्तं **शबरशीलः** प्रमुदितचेता निजप्रियतमायै 'तव पुत्रः' इति वितीर्णवान् । तत्कान्तया 'प्रसादः' इति भणितम् । वर्धापनकमहो-त्सवं विधाय द्वादशे दिवसे पित्रा तस्य पुत्रस्य **व्याघ्रदत्त** इति नामधेयं गुण्यं ददे । सर्वत्र च नगरान्तस्तदाऽस्य प्रच्छन्नगर्भा पत्नी प्रसूतेति विदितमभवत् । **शबरशीलस्तेन** बालकेन साकं पाटलीपुत्रमवाप । तत्र च समानशीलराजपुत्रैः सार्धं क्रीडां कुर्वतस्तस्य महामोह-

---

**क-ख**-"तया" इति ।

मोहितचेतसो लोकेन **मोहदत्त** इति संज्ञा कृता । एवं **मोहदत्तः** सह कलाकलापेन वयसा गुणगणेन च वर्धितुमारेभे ।

इतश्च **सुवर्णदेवा** गात्रपावित्र्यं निर्माय समागता बालकयुग्मम-प्रेक्षमाणा मूर्छिता । पुनरपि वायुना लब्धचैतन्या चिरं विललाप । ततः स्वयमेव सा स्वं संबोध्य ततः स्थानात् प्रचलिता । पुरतो व्याघ्रीपदानि दृष्ट्वा व्याघ्र्या बालकयुगलं भक्षितमिति चिन्तयन्ती तदनुमार्गमनुसरन्ती कस्मिन्नपि गोष्ठे कस्याश्चिदाभीर्या वेश्मनि समागता । तया 'दुहिता' इति स्थापिता । तत्र कियन्ति दिनानि स्थित्वा ग्रामानुग्रामं परिभ्रमन्ती पाटलीपुत्रं साऽप्यायाता । तत्र कर्मसंयोगेन तस्मिन्नेव दूतगृहे सा प्रविष्टा । तत्र च दूतकान्तया तद्दुहिता तस्या एव प्रतिपालनार्थमर्पिता । **सुवर्णदेवा** तामात्मीयां सुतां अजानन्ती केवलं तत्सुतामेव हृदि भावयन्ती तां वर्धयितुमारभत । सा सुता क्रमेणोदग्रयौवनप्राग्भरा लावण्याति-शायिनी सौभाग्यभूमिका चातुर्यधुर्या जाता ।

इतश्च जनमनःप्रमोदभरदायिनि मधुरमधुकरनिकरध्वनिताकुले वसन्तकाले मदनत्रयोदश्यां बाह्योद्याने कामदेवस्य यात्रां वीक्षितुं मातृसखीपरिवृता गता **वनदत्ता** । स्वैरं परिभ्रमन्ती च तत्रागतेन **मोहदत्तेन** विलोकिता तया च सः । तयोः परस्परं विलोकनेन प्रीतिः समभूत् । तत्रान्योन्यदर्शननीरसंसिक्तस्नेहमहीरुहं मिथुनं महतीं वेलां यावत्तस्थौ, तावत्**सुवर्णदेवया** स्वदुहितरि गाढतरं **मोहदत्ता**नुरागं विभाव्य जल्पितम्—'वत्से ! तवेहागताया गुर्वी वेला जाता, तव पितापि दुःखाकुलितमानसो भविष्यतीति तावत्प्रवर्तस्व गृहं व्रजामः । यदि तावत्तव कौतुकं ततो वत्से !

मदनोत्सवे निवृत्ते निर्जने कानने समागत्य पुनर्निजेच्छया भगवन्तमनङ्गं विलोकये:' इति जल्पन्ती तया समं वनान्निर्गता । चिन्तितं च **मोहदत्तेन**—'अहो! एतस्या ममोपरि समस्ति स्नेहः' इति सुवर्णदेवावचोऽवश्यं संकेतजनकं परिभावयन्**मोहदत्तः** काननान्निःससार । सा **वनदत्ता** काममहापिशाचग्रस्तेन देहेन निकेतनमायाता न पुनश्चेतसा । तत्रापि गुरुविरहज्वलनज्वालावलीकरालदेहा—

कङ्केल्लिपल्लवाकीर्णशयनीयतलस्थिता ।
वितीर्णास्थानहुङ्कारा, कामज्वरभरातुरा ॥ १ ॥
मृणालवलया रम्भादलावरणसंवृता ।
चन्दनद्रवसंसर्गसर्वाङ्गलतिका तदा ॥ २ ॥
निर्गच्छदुष्णनिःश्वासशुष्यमाणाधरावनी ।
परित्यक्तकलाभ्यासपुष्पताम्बूलभूषणा ॥ ३ ॥
विच्छायवदनाम्भोजा, दिवा चन्द्रकलेव या ।
न पल्यङ्के न वा भूमितले प्राप्तसुखाऽभवत् ॥ ४ ॥

चतुर्भिः कलापकम् ॥

**वनदत्ता**ऽन्यदा मदनोत्सवे व्यतीते तस्मिन्नेवोद्याने गन्तुकामा जननीसखीजनान्विता राजमार्गे **तोसलराजपुत्रेण** वीक्षिता । देशान्तरपरावर्तितरूपयौवनलावण्यवर्णस्तोसलस्तया **सुवर्णदेवया** न प्रत्यभिज्ञातः । तेन साऽपि दूरदेशान्तराऽसंभावनीयसमागमा नावगता । केवलं तस्य **तोसलराजपुत्रस्य** **वनदत्ताया** उपरि महती प्रीतिरुत्पन्ना । चिन्तितं च तेन—'एतां चारुलोचनां द्रव्यदानेन

विक्रमेण वाऽपरेण वाप्युपायेन परिणेष्यामि । सुन्दरमभवद्यद्ये(दे)षा बाह्योद्यानभुवं प्राप्ता । ततोऽहमपि तदनुमार्गलग्नो यास्यामि' इति विचिन्तयन् गन्तुं प्रवृत्तः । सा च **वनदत्ता** करिणीव सुललितगमना क्रमेण वनान्तर्विचचार ।

इतश्च गुरुतरानुरागदत्तहृदयेन **तोसलेन** लोकापवादमनपेक्ष्य दूरतो व्रीडां विमुच्य जीविताशामपि परित्यज्य भयमवगणय्य चिन्तितम्—'अयमत्रावसर इति ।' ततः कर्षितकरालकरवालो महामोहमूढमानसस्**तोसलो** बभाण—'भद्रे ! यदि जीवितेन ते कार्यं तदा मयैवसमं रमस्वेति । अन्यथा कृपाणलतयाऽनया भवतीं कथाशेषां करिष्ये ।' तत्तादृशं वृत्तं वीक्ष्य हाहारवमुखरेण सखीजनेन **सुवर्णदेवया** च पूत्चक्रे—'भो भो जनाः ! त्वरितं प्रधावत प्रधावत, अनेन मम पुत्री निरपराधैव कानने व्याधेन हरिणीव विनाश्यते ।'

इतश्च सहसा **मोहदत्तः** कदलीगेहतः कर्षितनिर्स्त्रिशो निःसृत्य प्रोवाच—'रे रे पुरुषाधम ! अग्राह्यनामधेय ! निस्त्रप ! स्त्रीषु प्रहरसि ? अहमस्या रक्षकस्तन्मम सम्मुखो भव ।' इति श्रुत्वा **तोसलस्**तदभिमुखं प्रत्यधावत । **तोसलेन मोहदत्तस्य** कृपाणप्रहारः प्रदत्तः । तेन च **मोहदत्तेन** करणकौशलेन तस्य प्रहारं वञ्चयित्वा प्रति प्रहारेण **तोसलराजपुत्रः** कृतान्तदन्तक्रकचगोचरीकृतः । ततो **मोहदत्तो वनदत्ता**भिमुखं चलितः । तया स जीवितदातेति प्रियः प्रतिपन्नः । सुताजीवितेति हृष्टमानसा **सुवर्णदेवा** समभवत् । **मोहदत्तेन** भणितम्—'भद्रे ! विश्वस्ता भव, कम्पं मुञ्च, भयं मा कार्षीः ।' ततस्तेन

मोहितेन **मोहदत्तेनालिङ्ग्य** यावत्तया सह रंस्यते तावदकस्मादेव दीर्घमधुरः स्वरस्तस्य कर्णातिथित्वं भेजे ।

जनकं मारयित्वाऽपि, जनन्याः पुरतोऽपि च ।
अरे ! रिरंससे मूढ !, स्वसारमपि सम्प्रति ॥ १ ॥

ततो **मोहदत्तेन** विलोकितोऽपि क्वापि कोऽपि न दृष्टः । एवं वारत्रयाकर्णनजातशङ्कः कोपकौतूहलाबद्धचित्तः खड्गरत्नव्यग्रपाणिर्मोहदत्तः सर्वतः काननान्तर्विलोकितुं प्रारेभे । तावद्भगवान् साक्षादिव धर्म एकोऽनगारचूडामणिस्तस्य दृग्गोचरमागतः । 'अमुना मुनिपतिना जल्पितम्' इति चिन्तयन्मोहदत्तः श्रमणक्रमणयुगलमभिनम्य नातिदूरे निविष्टः **सुवर्णदेवा वनदत्ता** सखीजनश्च । ततो **मोहदत्तेन** विज्ञप्तम्—'भगवन्! यत्त्वं कथयसि मातुः पुरतः पितरं व्यापाद्य स्वसारमभिरमसे तत्कथं ममायं पिता ? कथमियं माता ? कथं चेयं स्वसा ? इति ।' ततः स मुनिपतिः **कोशलाया** आरभ्य वृत्तं **तोसलमृतिं** यावत्तत्पुरः स्पष्टमाचष्टे । एकं तावदकृत्यं कृतं यत्त्वया पूर्वं जनकस्तोसलो व्यापादितः, इदं तावद्द्वितीयं यत्त्वं भगिनीमभिवाञ्छसि । ततः सर्वथा धिग् महामोहविलसितम् ।' एतन्निशम्य **सुवर्णदेवा वनदत्ताप्यधोमुखी** बभूव । **मोहदत्तोऽपि** निर्विण्णकामभोगो महाशुचिसमानं मानुषत्वं मन्यमानः प्रचुरतरवैराग्यमार्गमनुलग्नो जजल्पेदम्—

'अनन्तदुःखवृक्षाणां, मूलमज्ञानमेव च ।
अज्ञानमेव वृजिनं, भयमज्ञानमेव च ॥ १ ॥

ततो मुनीश ! मम कथय मया सर्वथैवाधन्येन किमाचरणीयम् ? येन सकलमपि पापं मूलादेव विनश्यति ।' भगवता समाख्यातम्—

'कलत्रपुत्रमित्रादि, सर्वमुत्सृज्य सर्वथा ।
दीक्षां भज भवाम्भोधिमज्जिनीमङ्गिनीमिव ॥ १ ॥'

**मोहदत्तेनेति** जल्पितम्–'भगवन्! मां प्रव्रज्यासङ्गतं तर्हि तनु ।' मुनिनादिष्टम्–'यदहं चारणश्रमणो न गच्छप्रतिबद्धस्तेन तव व्रतं दातुमनीशः । तथा—

दशाष्ट यस्य पञ्चाशद्, योजनानि यथाक्रमम् ।
विस्तारे शिखरे मूले, प्रोचुः सिद्धान्तवेदिनः ॥ १ ॥
**श्रीनाभिनन्दनो** यत्र, पवित्रितजगत्रयः ।
अवस्थितिं स्वयं चक्रे, स शैलेषु शिरोमणिः ॥ २ ॥
कर्माण्यपि विजृम्भन्ते, यत्र तावद्गुपुष्मताम् ।
**श्रीनाभिसूनुर्**नाभ्येति, यावल्लोचनगोचरम् ॥ ३ ॥
**कर्मेभपुण्डरीकश्रीः, पुण्डरीक**महामुनिः ।
यत्रावृतः शिवं प्राप, पञ्चभिर्मुनिकोटिभिः ॥ ४ ॥
**यस्मिन्नमिविनम्याख्यौ**, विद्याधरपती तथा ।
मुनिकोटिद्वयीयुक्तौ, परमं पदमीयतुः ॥ ५ ॥
**श्रीरामभरतौ वालिखिल्यानां** दशकोटयः ।
**प्रद्युम्नादिकुमाराणां** सार्द्धास्तिस्रश्च कोटयः ॥ ६ ॥
नारदः पाण्डवाः पञ्च, परेऽपि मुनिपुङ्गवाः ।
यत्रापुः क्षीणकर्माणः, सर्वदुःखक्षयं पदम् ॥ ७ ॥ युग्मम् ॥
यत्रैकस्यापि सिद्धिः स्यात्, तत्तीर्थं जगदुत्तमम् ।
अस्य किं प्रोच्यते यत्र, निर्वृता मुनिकोटयः ॥ ८ ॥
यत्र भूमीरुहश्रेणीरमणीयसुमच्छलात् ।
जिनाङ्घ्रिस्पर्शरहितान्, हसत्यन्यमहीधरान् ॥ ९ ॥

स्फुरन्निर्झरझात्कारैर्य एवमिव जल्पति ।
जनाः किमन्यतीर्थेषु, भ्रमन्ते हा विहाय माम् ॥ १० ॥
अतीवगुप्ता यत्रास्ति, शङ्के वश्यार्थमोषधी ।
तद्वृणोति स्वयं सिद्धिः, प्रकामं कामवर्जिता ॥ ११ ॥

तत्र श्रीशत्रुञ्जये महातीर्थे मया गच्छता गगनतलेनाऽवधिज्ञानतः परिज्ञातं त्वया निहतं जनकं, चिन्तितम्–'एकमकार्यं कृतमनेन यावद्द्वितीयं नाचरति तावत्सम्बोधयाम्येनम् ।' अयं तावद्भव्यः परमनेन मोहमोहितचेतसा विहितमहितम् ।

लक्षयोजनमानेन, कलितं काञ्चनाचलम् ।
निवेशयन्ति दण्डस्य, पदे ये चैकहेलया ॥ १ ॥
स्वयंभूरमणाभिख्यं, सागरं ये जिनेश्वराः ।
तरन्ति दुस्तरं बाहुदण्डाभ्यामपि लीलया ॥ २ ॥
एकेन भुजदण्डेन, धरामपि सभूधराम् ।
आतपत्रमिव क्षिप्रं, लीलयैव धरन्ति ये ॥ ३ ॥
त्रिलोकीतिलकास्तेऽपि, कर्मादेशवशंवदाः ।
किमुच्यते वराकस्य, भवतो मोहदत्त ! ही ॥ ४ ॥

अतो मया सम्प्रति वियतः समुत्तीर्य त्वं प्रतिबोधितः ।' विज्ञप्तं मोहदत्तेन–'भगवन् ! कथं पुनः प्रव्रज्या प्राप्या' इति । मुनिना भणितम्–'व्रज त्वं कौशाम्ब्यां दक्षिणे पार्श्वे भूपतेः पुरन्दरदत्तस्योद्याने समवसृतं श्रीधर्मनन्दनं मुनिप्रधानं गणाधिपं द्रक्ष्यसि । तत्र स गणभृत्तमः स्वयमेव तव वृत्तान्तमवगत्य दीक्षां दास्यति' इति वदन् कुवलयदलश्यामलं गगनतलमुत्पतितः । भोः पुरन्दरदत्तमहाराज ! सैष तद्वचनं श्रुत्वा गृहवासं परित्यज्य मामन्वेषयन्नि-

हागत इति ।' एवं च तदाकर्ण्य **मोहदत्तेन** भणितम्–'भगवन्! इदमित्थमेव किमपि नालीकं तावन्मां प्रव्रज्याभाजनं विधेहि ।'

> श्रीधर्मनन्दनगुरुर्गुरुगौरवार्हो
> मोहव्यपोहविशदीकृतचित्तवृत्तौ ।
> दीक्षां जिनेशगदितामथ **मोहदत्ते**
> दत्ते स्म सर्वसुखसिद्धिपदस्य बीजम् ॥ १ ॥

पुनरपि **श्रीधर्मनन्दनेन** भणितम्–'भो **वासव**! मन्त्रिवासव! यत्त्वया पृष्टं यथैतस्य चतुर्गतिलक्षणस्य संसारस्य किं प्रथमं कारणम्? । तत्रामी महामल्लाः पञ्च क्रोधमानमायालोभमोहाः प्रवृत्ता जीवं दौर्गत्यपथमुपनयन्ति ।'

इत्याचार्यश्रीपरमानन्दसूरिशिष्यश्रीरत्नप्रभसूरिविरचिते
**कुवलयमालाकथासंक्षेपे** श्रीप्रद्युम्नसूरिशोधिते
क्रोधमानादिकषायचतुष्टयतथामोहस्वरूप-
वर्णनो नाम प्रस्तावो द्वितीयः ॥ २ ॥

## ॥ अथ तृतीयः प्रस्तावः ॥

ततः स नृपतिः प्रमुदितचेताः सदामन्दानन्दकन्दकन्दलनाम्बुदस्य श्रीधर्मनन्दनस्य मुखतः कषायादिविपाकफललक्षणदेशनावचनामृतं तृष्णातरलित इव निपीय सदसः समुत्थाय निजं धाम समाजगाम।

इतश्च दिवसाधीश्वरेऽस्तगिरिशिखरमुपागते सायन्तनविधिं विधिवद्विधाय वसुधाधिपतिरचिन्तयत्—'अस्मिन् मदनमित्रे महोत्सवे ईदृशे प्रदोषे ते साधवः किं कुर्वन्ति? किं यथावादिनस्तथाविधायिनः? किं वान्यथा? विलोकयामि' इति विचिन्त्यालक्षितः सर्वत्र प्रसृते तमोभरे कटीतटनिबद्धक्षुरिकः कृपाणपाणिरेकाकी भूपतिः सौधान्निर्गत्य नगरान्तररथ्यासु मिथुनानां दूतीनामभिसारिकाणां च प्रभूतान्परस्परालापानाकर्णयन् कस्मिँश्चिच्चत्वरे सान्धकारे स्तम्भमिव वृषभेणोद्धृष्यमाणमूर्द्धदमं कमपि मुनिं प्रतिमास्थं कृशाङ्गं दवदग्धस्थाणुसदृशं मन्दराचलवन्निश्चलं वीक्ष्य दिवा स्तम्भोऽत्र नाभूत्—'किं कोऽपि धर्मनन्दनसंबन्धी व्रती?, अथवाऽन्यः कोऽपि दुष्टः पुमान्? अनेन रूपेण तावत्परीक्षामस्य रचयामि' इतिध्यात्वाऽऽकृष्टरिष्टिर्हत हतेति वदन्नासन्नमागतः। तमक्षुब्धं मुनिं वीक्ष्य निश्चित्य स्तुतिं कुर्वन् प्रदक्षिणात्रयं पूर्वं दत्त्वा प्रणिपत्य पुरतोऽगच्छद्विद्युदुत्क्षिप्तकरणेन। ततोऽसौ दुर्लङ्घ्यं प्राकारमुल्लङ्घ्योद्यानासन्नसिन्दूरकुट्टिमतलमाजगाम। तत्र च तेन भूभुजा श्रीधर्मनन्दनाचार्यस्य केचित्साधवो मधुरस्वरेण स्वाध्यायं विरचयन्तः केचिद्धर्मशास्त्राणि पठन्तः केचित्पिण्डस्थपदस्थरूपस्थरूपातीत-

ध्यानदत्तावधानाः केचिद्गुरुचरणशुश्रूषापरायणाः केचिद्विचाराचार-परा विलोकिताः । ततो नृपतिर्दध्याविति–'अहो ! यथाऽभिधायी तथाविधायी । 'भगवान् क्व पुनः ? स स्वयं किं करोति ?' इति विमृशंस्तद्दिनदीक्षितानां तेषां पञ्चानामपि मुनीनां पुरो धर्ममुपदि-शन्तं निशम्य किं कथयत्येषामग्रे ?' इति विचिन्त्य नरेश्वरस्तमाल-तरुमूले निषण्ण इत्यश्रौषीत् ।

'भो भो देवानांप्रियाः ! कथमपि जीवा इमे पृथिव्यप्तेजोवायुव-नस्पतिष्वनन्तकालं भ्रान्त्वा द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियतामवाप्य तिर्यक्पञ्चेन्द्रियत्वं च, ततश्चातीवदुर्लभं मनुष्यजन्म लभन्ते । तत्राप्यार्यदेशप्रशस्यजातिसुकुलसर्वेन्द्रियपटुत्वनीरोगताजीवितव्यमनो-वासनासद्गुरुसमायोगतद्वचःश्रवणानि दुष्प्रापाणि । इयत्यां सामग्र्यां संपन्नायामपि जिनप्रणीतबोधिरत्नमतीवदुर्लभम् । तच्च लब्ध्वा धर्मं प्रति संशयेन अन्यान्यधर्माभिलाषेण फलं प्रति संदेहेन कुतीर्थिक-प्रशंसया तत्परिचयेन चतुर्भिः कषायैः पञ्चभिर्विषयैर्व्यामूढा वृथा निर्गमयन्ति सम्यक्त्वम् । एके च–'ज्ञानमेव प्रधानम्' इति वदन्तः क्रियाहीनाः पङ्गुवत् । अपरे च–'क्रियैव प्रशस्या' इति मन्यमाना अन्धवद्भवदवान्तर्विनश्यन्ति मोहमोहिताः ।' इति कथयति भगवति नृपतिर्ध्यातवान्–'तावत्सर्वमपि सत्यमेतत् । किं पुनरिदं दुर्लभं राज्यं महिलाप्रभवं शर्म परिजनसुखं चानुपाल्य पश्चाद्धर्ममा-चरिष्यामि' इति चिन्तयतस्तस्य महीभृतः श्रीधर्मनन्दनगुरुणा ज्ञानेन भावमुपलक्ष्य तेषामेव पञ्चानां पुरः प्रोचे–'यदेतद्राज्य-सौख्यं स्त्रियश्च लोके सर्वमेतदनित्यं तुच्छं चेति । पुनः सिद्धिभवं सुखमनन्तमक्षयमव्याबाधं चेति ।'

अस्ति समस्तपुरवरं पाटलीपुत्रं पुरम् । तत्र धनो धनेन धनद इव वणिगुत्तमः । सोऽन्यदा यानपात्रेण रत्नद्वीपं प्रति प्रचलितः । तस्य संचरतः समुद्रान्तः प्रचण्डेन वायुना समुल्लसताऽभ्रंलिहकल्लोल-मालाभिः प्रेर्यमाणं यानपात्रं पुस्फोट । स धनस्तदा क्षुधाक्षामकुक्षि-राहारमिव, हिमार्त्तो वैश्वानरमिव, तृषाक्रान्तस्तोयमिव फलकमेकं प्राप्य सप्तभिर्वासरैः कटुकफलसमाकुलपादपशतसंकुलं संसारमिवा-लब्धपारं विषमिव महाविषमं कुडङ्गद्वीपमाशिश्राय । तत्र तेन स्वैरं परिभ्रमता सहसाऽपरः पुरुषो ददृशे । धनस्तं निरीक्ष्य हर्षि-तवदनो भव्यजीव इव जैनधर्मं स्वच्छमनाः पप्रच्छ—'कुत्रत्यः ? केन हेतुनाऽत्र द्वीपं समायातः ? ।' तेन तदवगम्य भणितम्—'सुवर्णद्वीपं प्रति प्रचलतो मम भीषणे जलधावगाधे पूर्वभवार्जितदुष्कृतेनेव वायुना प्रेरितं त्वरितमेवागण्यपण्यसंभृतं पोतमस्फुटत् । ततोऽहं फल-कमेकं प्राप्य कुडङ्गद्वीपमाश्रितः ।' ततो धनेनेति भणितम्—'सममे-वात्र परिभ्रमावः ।' अथ तत्रैव ताभ्यां परिभ्रमद्भ्यां कदाचित्तृतीयं पुरुषं मिलितं विलोक्य पृष्टम्—'भद्र ! कुतः पुरादत्र द्वीपे समायात-वान् ? ।' तेनेति जल्पितम्—'मम व्रजतो लङ्कापुरीं वाहनं भग्नं फलकमास्यात्र संप्राप्तः ।' ताभ्यां निगदितम्—'अतीवरम्यतरम-भूत्, यदस्माकं त्रयाणामपि समदुःखानां महती मैत्री समजनि । तावदत्र कस्मिन्नपि समुन्नते पादपे भिन्नयानपात्रचिह्नमूर्द्धीक्रियते ।' तथेति प्रतिपद्य तैर्वल्कलमेकं तरुशिखरे निबद्धम् । ततस्तृष्णा-क्षुधाक्रान्ताः सर्वत्र परिभ्रमन्तस्तं कमपि तादृशं शाखिनं न पश्यन्ति । एवं तैः सर्वत्र द्वीपे स्वैरं विचरद्भिर्दुःखशतसमाकुलैः कथमपि वेश्मा-काराणि त्रीणि कुडङ्गानि दृष्टानि । ते एकैकं कुडङ्गमाश्रित्य स्थिताः ।

तेषु च काकोदुम्बरिकामेकैकां निरीक्ष्य चातीवोच्छ्वसितहृदयैर्भणितम्—'अहो! साम्प्रतं प्राप्तव्यं प्राप्तम्, वयं निर्वृतचेतसः संजाता एतद्दर्शनमात्रेणापि।' तैः कुडङ्गेषु प्रविश्य काकोदुम्बरिकाफलानि विलोकितानि, परमेकमपि फलं न ददृशे। ततस्त्रयोऽप्यतीवदुर्मनसो बभूवुः। कैश्चिदपि दिवसैस्तेषां मनोरथशतैः काकोदुम्बरिकाः फलाकुलास्तत्र जज्ञिरे। ते काकाद्युपद्रवेभ्यो रक्षन्तस्तिष्ठन्ति।

इतश्च केनापि सांयात्रिकेण करुणावता भिन्नवहनचिह्नमालोक्य कर्णधारद्वयं प्रैषि। ततस्ताभ्यां सर्वत्रान्वेषयद्भ्यां पुरुषत्रयं कुडङ्गस्थं काकोदुम्बरिकाफलबद्धजीविताशयं निरीक्ष्य भणितम्—'आवां पोतवणिजा प्रेषितौ भवतामानयनाय। अत्र द्वीपे दुःखशतप्रचुरे किं तिष्ठथ?।' तत्रैकेन नरेणेत्युक्तम्—'किमत्र द्वीपे कष्टम्?, एतत् कुडङ्गं गृहतुल्यम्, एषा च काकोदुम्बरिका फलिता भूयोऽपि फलिष्यति, अहं महता सुखेनात्र तिष्ठामि, कथमपि परतटं नागच्छामि' इति भणित्वा तत्रैवैकः पुरुषः स्थितः। ततस्ताभ्यां निर्यामकाभ्यां द्वितीयो भणितः—'त्वमपि परतटमागच्छ।' तदाकर्ण्य तेन भणितम्—'अहं काकोदुम्बरिकापक्वफलमेकमुपभुज्य यः कोऽपि पश्चात्तात्त्विकः समेष्यति तेन सहागमिष्यामि' इति भणित्वा द्वितीयोऽपि तत्र तस्थिवान्। ततस्ताभ्यां तृतीयो भणितः—'भो भद्र! किमत्र करोषि साम्प्रतं परतीरमागच्छ।' 'भवतां स्वागतम्' इति भणित्वा तृतीयः पुमान् ताभ्यां समं गत्वाऽसमप्रीत्या तरण्डमारुरोह। कियद्भिरपि दिनैर्वहनं तटं प्राप। तत्र पुत्रमित्रकलत्रधनधान्यादिभिर्वस्तुभिर्मिलितः सततमेव स सुखमनुभवन्नास्ते।

अथास्योपनयः श्रूयताम्—

य एष जलधिर्घोरसंसारः स दुरुत्तरः ।
यः कुडङ्गो महाद्वीपः, स मानुष्यभवः स्मृतः ॥ १ ॥
ये कुडङ्गा निवासास्ते, ये तत्र पुरुषास्त्रयः ।
त्रिप्रकारा भवेयुस्ते, जीवाः संसारवर्तिनः ॥ २ ॥
काकोदुम्बरिका यास्तु, कान्तास्तास्तारलोचनाः ।
फलानि यानि तत्र स्युस्तान्यपत्यानि भूरिशः ॥ ३ ॥
वृथाकृताशापाशास्ते, ता एवात्यन्तकोविदाः ।
दारिद्र्यदुःखरोगौघशकुनेभ्यो निरन्तरम् ॥ ४ ॥
यत्परत्र हितं स्वस्य, तदेवायाति विस्मृतिम् ।
वैधेयानां गृहानेककार्यव्यापृतचेतसाम् ॥ ५ ॥
यः पोतेशः स च गुरुर्निर्यामौ धर्मयोर्युगम् ।
या तरी तत्र दीक्षा सा, यत्तीरं सा च निर्वृतिः ॥ ६ ॥
संसारदुःखसंतप्तान्, जीवानुत्तारयन्ति ये ।
सर्वदैव महासत्त्वाः, सर्वतत्त्वावलोकिनः ॥ ७ ॥
निन्द्यं मनुष्यजन्मेदं, शोचनीयमनेकधा ।
मोक्षसौख्यं भजस्वेति, ते वदन्ति यतीश्वराः ॥ ८ ॥
अभव्यजीवस्तत्रैको, द्वीपेऽत्र नृभवे वदेत् ।
यत्सौख्यं स च मे मोक्षस्तत्तेन मम किं पुनः ? ॥ ९ ॥
ब्रूते द्वितीयः संसारी, दूरभव्यो मुनीश्वर ! ।
पुत्रमित्रकलत्रादिममत्वं त्यक्तुमक्षमः ॥ १० ॥
भव्यस्तृतीयो वदति, श्रुत्वा सद्धर्मदेशनाम् ।
मनुष्यलोके कश्चिछेद्धरिष्ठे दुःखबाधया ॥ ११ ॥

सप्ताङ्गराजि यद्राज्यं, प्राज्यं रम्या च सन्ततिः ।
भवे भवे भवत्येव, जैनदीक्षा कदापि न ॥ १२ ॥
ततो ममालमेतेन, जन्मना दुःखजन्मना ।
समुद्यमं करोम्येष, महोदयपदश्रिये ॥ १३ ॥
भूयोऽप्यूचे कथामेतामुक्त्वा श्रीधर्मनन्दनः ।
भो वत्साः ! व्रतदृष्टान्तमाकर्णयत सम्प्रति ॥ १४ ॥

तथाहि जम्बूद्वीपेऽत्र, क्षेत्रे भरतनामनि ।
देशोऽस्ति मगधाभिख्यो, वसुधामुखमण्डनम् ॥ १ ॥
अनेकदेशविख्यातं, श्रियामेकः समाश्रयः ।
अस्ति राजगृहं तत्र, नगरं नगराजिनम् ॥ २ ॥
तस्मिन् परंतपो नाम्ना, कर्मणा च महीपतिः ।
विख्यातकीर्त्तिविस्फूर्त्तिर्दिशासु चनन्तृष्वपि ॥ ३ ॥
शश्वद्विवस्वतस्तुल्यो, यः कैलासौकसः समः ।
वाचस्पतेः समानश्च, प्रतापेन श्रिया धिया ॥ ४ ॥
वीतरागपदाम्भोजभृङ्गः सम्यक्त्वधारकः ।
प्रतापशोषिताशेषारातिभूमीरुहोऽभवत् ॥ ५ ॥ विशेषकम् ॥
वशीकृतनतानेकभूपमौलिविलासिभिः ।
मणीनां किरणैर्यस्य पादपीठं समर्चितम् ॥ ६ ॥
यस्तु कण्ठीरव इव, प्रदरैर्नखरैः खरैः ।
विपक्षान् गजलक्षाणि, क्षणुते स्म क्षमापतिः ॥ ७ ॥
तस्यानेकपुरन्ध्रीणां, श्रेष्ठा ज्येष्ठा गुणश्रिया ।
समस्ति शशिकान्तास्या, शशिकान्ताभिधा प्रिया ॥ ८ ॥

तत्र चास्ति महादक्षः, शुद्धबुद्धिर्धनाभिधः ।
श्रेष्ठी गरिष्ठः सुगुणैः, पुण्यसंभारभाजनम् ॥ ९ ॥
धारिणीति शुभारम्भा, रम्भारूपसरूपकृत् ।
प्रभुतेव सदाचारस्यास्य लोकंपृणा प्रिया ॥ १० ॥
धनपालो धनदेवो, धनगोपस्तथा परः ।
धनरक्षितनामाथ, चत्वारस्तनयास्तयोः ॥ ११ ॥
सर्वेऽपि पाठिताः पुत्राः, पित्रोपाध्यायसन्निधौ ।
अल्पैरपि दिनैर्विद्याम्बुनद्याश्च तेऽभवन् ॥ १२ ॥
मनोभवनृपोद्यानं, शृङ्गारद्रुमजीवनम् ।
ततस्तेन(ःक्रमेण) जनानन्ददायि यौवनमाययुः ॥ १३ ॥
तत्रैव स धनः पुत्रान्, महेभ्यानां समश्रियाम् ।
कन्यकाभिः सुरूपाभिः, क्रमशः पर्यणाययत् ॥ १४ ॥
प्रथमस्योज्झिका जाया, भक्षिकाख्या परस्य च ।
रक्षिकाथ तृतीयस्य, चतुर्थस्य तु रोहिणी ॥ १५ ॥
सुखं विषयजं ताभिः, सेवमानाः सुता गतम् ।
भूयिष्ठमपि ते कालं, देवा इव न जानते ॥ १६ ॥
स कदाचिद्धनः श्रेष्ठी, जजागार निशाञ्चले ।
धर्मानुध्यानमाधाय, गृहचिन्तां चकार च ॥ १७ ॥
स्त्रिया गृहस्य निर्वाहो, नरि यन्तरि सत्यपि ।
धुरयेव शताङ्गस्य, भृतस्यानेकवस्तुभिः ॥ १८ ॥
पुत्रपौत्रवधूभृत्यैराकीर्णमपि मन्दिरम् ।
भार्याहीनं गृहस्थस्य, शून्यमेव विभाव्यते ॥ १९ ॥

भुक्ते प्रियतमे भुङ्क्ते, सुप्ते च स्वपिति स्वयम् ।
तस्य पूर्वं च जागर्ति, सा श्रीरेव न गेहिनी ॥ २० ॥
करोति सारां सर्वस्मिन्, द्विपदे च चतुष्पदे ।
सर्वस्यौचित्यमाधत्ते, सा लक्ष्मीर्गृहिणीमिषात् ॥ २१ ॥
एतासां तु वधूटीनां, मध्यान्मम निकेतने ।
गृहभारसमुद्धारकारिणी का भविष्यति ॥ २२ ॥
ततः स प्रातरुत्थाय, प्रातःकृत्यं विधाय च ।
सूपकारैः कलासारैर्धान्यपाकमकारयत् ॥ २३ ॥
पितृवर्गं चतसृणां, वधूटीनां निमन्त्र्य सः ।
अपरं पौरलोकं च, भोजयामास सादरम् ॥ २४ ॥
भोजनान्ते ततः श्रेष्ठी, बान्धवान् स न्यवेशयत् ।
सच्चकार च ताम्बूलस्रग्दुकूलविलेपनैः ॥ २५ ॥
समक्षमथ सर्वेषां, वधूमाकार्य चोज्झिकाम् ।
पञ्च शालिकणास्तस्याः, समार्पयदखण्डितान् ॥ २६ ॥
गत्वैकान्ते तया चित्ते, चिन्तितं मन्दमेधसा ।
अभूद्वृद्धत्वसंबन्धात्, श्वशुरो विपरीतधीः ॥ २७ ॥
महान्तमुत्सवं कृत्वा, जनानाहूय सर्वतः ।
पञ्च शालिकणानेष, पाणौ मम यदार्पयत् ॥ २८ ॥
त्यजामि किं कणैरेतैर्यदा याचिष्यतेऽसकौ ।
तदाऽन्यानर्पयिष्यामि, ध्यात्वेत्युज्झाञ्चकार तान् ॥ २९ ॥
अथ वध्वै द्वितीयस्यै, पञ्च शालिकणान् ददौ ।
धनः श्रेष्ठी गृहीत्वा सा, विजनेऽचिन्तयच्चिरम् ॥ ३० ॥

हेतुना श्वशुरः केन, भ्रान्तो बुद्धियुतोऽप्यसौ ।
यः कार्येण विना गेहे, तनुते द्रविणव्ययम् ॥ २१ ॥
प्रयच्छति कणान् पञ्च, लोकस्य पुरतः करे ।
त्यजामि तान् कथं दत्ताः, ये तातेन मम स्वयम् ॥ २२ ॥
सा स्नुषा निस्तुषानेतान्, कृत्वा क्षिप्रमभक्षयत् ।
आकारयदथ श्रेष्ठी, तृतीयां रक्षिकां वधूम् ॥ २३ ॥
व्यश्राणयत्कणान् पञ्च, तस्याः सा च व्यचिन्तयत् ।
मन्ये किञ्चिन्महत्कार्यं, कणैरेतैर्भविष्यति ॥ २४ ॥
सर्वानेतान् प्रयत्नेन, रक्षामि महता यदा ।
याचिष्यते गुरुस्तूर्णमर्पयिष्ये तदा कणान् ॥ २५ ॥
हृदये चिन्तयित्वेति, स्वालङ्कारकरण्डके ।
शुद्धवस्त्रे नियन्त्र्येति, क्षिप्त्वा रक्षिकया तया ॥ २६ ॥
वीक्षामास त्रिसन्ध्यं सा, देवतामिव तान् कणान् ।
आकारिता ततस्तेन, चतुर्थी रोहिणी वधूः ॥ २७ ॥
तेन प्रजल्पिता दत्त्वा, पञ्च शालिकणान् करे ।
त्वतो वत्से! यदा याचे, देया एते तदा त्वया ॥ २८ ॥
विजने रोहिणी गत्वाऽचिन्तयद्बुद्धिशालिनी ।
मत्या मे श्वशुरो वाचस्पतिप्रतिकृतिः कृती ॥ २९ ॥
महाजनप्रधानोऽसौ, नानाशास्त्रविशारदः ।
वर्द्धयामि तदेतेन, प्रदत्तं कणपञ्चकम् ॥ ३० ॥ युग्मम् ॥
तयैवं ह्यनुध्याय, प्रेषितास्ते पितुर्गृहे ।
भ्रातॄणामिति चादिष्टं, निजा इव कणा अमी ॥ ३१ ॥

वर्षे वर्षे च वर्षासु, वापं वापं स्वहालिकैः ।
तथा कथञ्चनाप्येवं, यान्ति वृद्धिं यथा पराम् ॥ ४२ ॥ युग्मम् ॥
ततस्तैर्बन्धुभिस्तस्याः, गिरा प्राप्ते घनागमे ।
उप्ताः शालिकणाः पञ्च, ते वप्रे वारिहारिणि ॥ ४३ ॥
स्तम्बीभूय गता वृद्धिं, शालयः कणशालिनः ।
प्रस्थस्तेषामभूदेकः, प्रथमे वत्सरे ततः ॥ ४४ ॥
द्वितीये त्वाढकोऽनेके, द्रोणा वर्षे तृतीयके ।
खारीशतानि तुर्ये तु, पल्यलक्षाणि पञ्चमे ॥ ४५ ॥
अथान्यस्मिन् दिने श्रेष्ठी, निमन्त्र्य स्वजनान् बहून् ।
महान्तमुत्सवं चक्रे, पूर्वरीत्या निकेतने ॥ ४६ ॥
समाहूयोज्झिकां ज्येष्ठां, वधूमर्थयति स्म सः ।
वत्से ! समर्पय मम, तच्छालिकणपञ्चकम् ॥ ४७ ॥
तदाकर्ण्य गृहस्यान्तः, सहसापि प्रविश्य सा ।
पञ्च शालीनथानीय, तस्य हस्ते समार्पयत् ॥ ४८ ॥
तेनापि जल्पिता सर्वप्रत्यक्षं शपथैर्निजैः ।
त एव शालयो वत्से !, न वा सत्यं वदाधुना ॥ ४९ ॥
तयाथ जल्पितं तात !, प्रोज्झितास्ते मया कणाः ।
श्रुत्वेति लोकपुरतः, श्रेष्ठी रुष्टः स जल्पति ॥ ५० ॥
अयुक्तं कृतमेतेन, यूयमेतद्भणिष्यथ ।
अन्यथा पापया त्यक्ताः, शालयस्ते मदर्पिताः ॥ ५१ ॥
तस्मादस्याः करिष्यामि, फलं तत्त्यागसंभवम् ।
छगणादिपरित्यागकारिणी भवतूज्झिका ॥ ५२ ॥

द्वितीयां तामथाहूय, श्रेष्ठ्यूचे पुत्रि ! तान् कणान् ।
समर्पय ममेदानीं, साऽब्रवीद्भक्षिता मया ॥ ५३ ॥
स श्रेष्ठिपुङ्गवोऽवोचत्, स्वजनानां पुरस्ततः ।
पचनादिषु कार्येषु, भवताद्भक्षिका वधूः ॥ ५४ ॥
तृतीया श्वशुरेणोक्ता, सा शालिकणरक्षणम् ।
निजं न्यवेदयत्तुष्टः, श्रेष्ठिश्रेष्ठस्ततोऽवदत् ॥ ५५ ॥
मदीयमन्दिरे लोकाः, कोशे सर्वाधिकारिणी ।
वधूटी रक्षिकानाम्नी, भवत्वेषा ममाज्ञया ॥ ५६ ॥
आकार्य जल्पिताऽनेन, चतुर्थी रोहिणी ततः ।
समानय कणान् पञ्च, वत्से ! त्वमपि साम्प्रतम् ॥ ५७ ॥
प्रजल्पितं तया तात !, शकटानि बहूनि मे ।
अर्प्यन्तां वृषभाः प्राज्याः, शालिरानीयते यथा ॥ ५८ ॥
अभाणि श्रेष्ठिना तेन, वत्से ! पञ्च कणाः कथम् ।
जज्ञिरे यानवाह्यास्ते, स हेतुः कथ्यतां मम ॥ ५९ ॥
यत्कृतं मूलतो वध्वा, कथितं तत्पुरस्तथा ।
मुदितस्तत्तदाकर्ण्य, स श्रेष्ठी समजायत ॥ ६० ॥
स्नुषायाः सोऽर्पयामास, शकटान् वृषभांस्तथा ।
अथानीतस्तया वध्वा, शालिः सर्वः पितुर्गृहात् ॥ ६१ ॥
प्राह्राथ स्वजनो धन्यो, धनो यस्येदृशी वधूः ।
निन्यिरे कीदृशीं वृद्धिं, पञ्च शालिकणा यया ॥ ६२ ॥
ऊचे तया ततस्तात !, गृह्यन्तां पञ्च ते कणाः ।
इति श्रुत्वा तदा श्रेष्ठी, जनप्रत्यक्षमब्रवीत् ॥ ६३ ॥

सर्वस्वस्वामिनी गेहे, वधूर्मम भवत्वसौ ।
अस्या एव समादेशः, कर्त्तव्यः सर्वमानुषैः ॥ ६४ ॥
अस्या यः खण्डयत्याज्ञां, स्थातव्यं तेन नो गृहे ।
सर्वैरपि जनैः शीर्षे, तद्वचः शेखरीकृतम् ॥ ६५ ॥
उद्यदानन्दसन्दोहमेदुरः स धनः क्रमात् ।
निश्चिन्तचित्तः सद्धर्मालङ्कर्मीणस्ततोऽभवत् ॥ ६६ ॥
एतदाख्यानकं शैक्षाः, कथितं भवतां मया ।
सिद्धान्तोदितमेतस्य, भावार्थं शृणुताधुना ॥ ६७ ॥
यथा राजगृहं लोके, मानुषत्वमिदं तथा ।
यथा धनस्तथाचार्यो, विचारचतुराननः ॥ ६८ ॥
यथा वध्वस्तथा ज्ञेयाः, विनेयाश्च चतुर्विधाः ।
पञ्च शालिकणा ये सा, ज्ञेया पञ्च-महाव्रती ॥ ६९ ॥
यथा स्वजनवर्गोऽसौ, तथा सङ्घश्चतुर्विधः ।
दानं शालिकणानां यत्तन्महाव्रतरोपणम् ॥ ७० ॥
उज्झिकेव शालिकणानुज्झेत्पञ्चमहाव्रतीम् ।
यः स्यादत्र परत्रापि, स दुःखौघस्य भाजनम् ॥ ७१ ॥
निरशङ्कमुपभुक्तास्ते, यथा भक्षिकया तया ।
व्रतमाजीविकाहेतोर्न विधेयं तथा बुधैः ॥ ७२ ॥
ररक्ष रक्षिका यद्वत्, तच्छालिकणपञ्चकम् ।
तद्वद्व्रतिजनै रक्ष्यं, तन्महाव्रतपञ्चकम् ॥ ७३ ॥
महाव्रतानि संप्राप्य, वृद्धिं नेयानि धीमता ।
रोहिण्या गुरुणा दत्ताः, पञ्च शालिकणा यथा ॥ ७४ ॥

॥ इति व्रतदृष्टान्तः ॥

विनयः शासने मूलं, विनीतः संयतो भवेत् ।
विनयाद्विप्रमुक्तस्य, कुतो धर्मः कुतस्तपः ? ॥ १ ॥
विनीतः श्रियमाप्नोति, विनीतस्तूज्ज्वलं यशः ।
कदापि दुर्विनीतेन, नैव स्वार्थः प्रसाध्यते ॥ २ ॥

यतः—

"गुणवानपि नाप्नोति, नूनं स्तब्धः परां श्रियम् ।
किञ्चिन्नम्रः पिबन्नम्भः, कुम्भः प्राप्नोति पूर्णताम् ॥ १ ॥"
अपराधतमस्तोमनिर्मूलनदिनेश्वरः ।
स्वर्गापवर्गसंसर्गकारणं विनयः सदा ॥ ३ ॥
विनयः सर्वथा कार्यः, कुलीनेन वपुष्मता ।
गुरूणां गुणवृद्धानां, तथा बालतपस्विनाम् ॥ ४ ॥
गुणेषु विनयः श्लाघ्यस्तेजस्विषु यथा रविः ।
येन कर्मग्रहाः सर्वे, प्रच्छाद्यन्ते निजोदयात् ॥ ५ ॥
विनयात्संपदः सर्वाः, मेघादिव जलर्द्धयः ।
केवलज्ञानलाभश्च, विनीतस्यैव जायते ॥ ६ ॥

तथाहि—

जम्बूद्वीपाभिधे द्वीपे, क्षेत्रे भरतनामनि ।
क्षमापुरी क्षमारम्या, समस्ति स्वस्तिकारिणी ॥ १ ॥

यस्या उन्नत (रम्य) राजसदनश्रेण्याः पुरो मेनका-
प्राणेशोऽपि बभूव हीनमहिमा वन्यश्रियामग्रतः ।
निःस्वानन्दनकाननस्य सुषमा क्षीराशयानां पुरः,
पंपादीनि सरांसि हन्त ! नितरां मुञ्चन्त्यहङ्कारिताम् ॥ २ ॥

तत्र क्षमापतिरभूत्, क्षमापतिकृतस्तुतिः ।
नभस्तले भानुरिव, श्रीमान् हर्षाभिधः सुधीः ॥ ३ ॥
गुणौघे विद्यमानेऽपि, लोभो यस्याधिकोऽभवत् ।
अभिरामं गुणग्रामं, ग्रहीतुं गुणशालिनाम् ॥ ४ ॥
समुद्रकन्दर्पघनाघनानां, सारं समादाय विधिर्व्यधाद्यम् ।
न चेदिदं तत्कथमन्यथाभूदसौ गभीरः सुभगः प्रदाता ॥ ५
यश्चानूनगुणप्रसूनपटलप्रत्युल्लसत्सौरभ-
व्याप्ताशेषमहीतलः शुभकलः श्रेयःश्रियामाश्रयः ।
स्फूर्जत्कीर्तिलतावितानविलसत्कन्दः सदानन्दभूः,
प्रोन्मीलत्सुकृतोन्मुखो न विमुखो याच्ञाकृतां कुत्रचित् ॥६॥
माद्यच्छात्रवकोटिकोटिकरटिप्रस्फोटकण्ठीरव-
स्ताम्यन्नीतिलतावलीकिशलनप्रोद्दामधाराधरः ।
यत्कीर्त्या च शुचीकृते त्रिभुवनेऽश्रान्तं स्फुरन्त्याभितः,
सर्वज्ञोऽपि वसन्न वेत्ति नियतं कैलासशैलं निजम् ॥ ७ ॥
कल्पद्रुमाद्या ददतीप्सितं यत्, सा शास्त्रवार्त्ता किल तेन दृश्या।
प्रत्यक्षमेतं वसुधाधिनाथं, तत्तन्मयं निर्मितवान् विधाता ॥ ८ ॥
तत्र श्रेष्ठिपदभ्रष्टः, श्रेष्ठी दौर्मुख्यदोषतः ।
**विषवाक्य** इति ख्यातो, विद्यते कृषिजीवनः ॥ ९ ॥
अन्यदा भक्तमादाय, स्वयं कर्मकृतां कृते ।
गच्छन् शून्ये ददर्शैष, रुदन्तं बालमेककम् ॥ १० ॥
प्रोद्यत्कृपाभरभ्राजिहृदयः शिशुमाशु तम् ।
लात्वा स्वपाणिनारोप्य, कटीतटमभोजयत् ॥ ११ ॥

त्यक्तः केनाप्ययं पाको, वराकस्तद्विपत्स्यते ।
स्वीकृतेनैव तेनेति, श्रेष्ठी क्षेत्रं ययौ निजम् ॥ १२ ॥
स स्ववेश्म समागत्यापत्याभावार्दितस्ततः ।
दीनास्यायै कुटुम्बिन्यै, तं मुदा डिम्भमार्पयत् ॥ १३ ॥
लाल्यमानस्तया नित्यमात्मनात्मेव बालकः ।
कलाभिः कलितः प्राप, कलाभृदिव यौवनम् ॥ १४ ॥
दग्धं पितृगिरा लोकं, स्ववाक्यैरमृतैरिव ।
निर्वापयन्नभूत्ख्यातः, संख्यावान् सर्वतोऽपि सः ॥ १५ ॥
**विनीत** इति नाम्नाथ, सर्वत्र प्रथितोऽभवत् ।
श्रेष्ठित्वं नृपतिस्तुष्टोऽदात्तस्मै तत्पितुः पदम् ॥ १६ ॥
जिनशासनमाहात्म्यसमुल्लासनवासनः ।
अभिरामगुणग्रामद्रुमारामोऽवनीतले ॥ १७ ॥
योऽभवन्नयनानन्ददायी यायी सदध्वनि ।
अवदातयशोजातसंपूरितदिगन्तरः ॥ १८ ॥
श्रमणक्रमणाम्भोजसेवाहेवापरः सदा ।
अर्थसंप्रीणितात्यर्थावनीतलवनीपकः ॥ १९ ॥
पैतृकं च पदं प्राप्य, प्रसन्नमनसो नृपात् ।
स **विनीतः** श्रियां पात्रं, भाग्यसौभाग्यभूरभूत् ॥ २० ॥
अथ तत्रैव दुर्भिक्षं, भीषणं समुपस्थितम् ।
यत्र धर्मक्रियालोपो, भव्यानामपि संभवेत् ॥ २१ ॥
कुतोऽपि स्थानतोऽभ्येत्य, नित्यदुर्भिक्षदुःखिताः ।
वृद्धो वृद्धा युवा चैकोऽभवंस्तदनुजीविनः ॥ २२ ॥

अथ वैरिदत्तकम्पा, चम्पा नाम महापुरी ।
तत्रास्ति पृथिवीनाथो, जितारिरिति संज्ञया ॥ २३ ॥
प्रतापी कमलोल्लासी, नृपस्तपनसन्निभः ।
न कर्कशकरश्चित्रं, न गोमण्डलतापकृत् ॥ २४ ॥
श्यामास्यो हि घनो वर्षन्, तमोग्रस्तपनस्तपन् ।
यः प्रभुस्त्वर्थिनोऽत्यर्थमर्थैः प्रीणन्न तादृशः ॥ २५ ॥
श्रीहर्षः कृतहर्षश्रीर्जिघृक्षुस्तमधीश्वरम् ।
प्रचचाल विनीतेन, सार्द्धं प्रेष्ययुतेन सः ॥ २६ ॥
तदागमं परिज्ञाय, चम्पेशः सम्मुखोऽचलत् ।
ततः परस्परं युद्धं, सैन्ययोरुभयोरभूत् ॥ २७ ॥
अरुधत्सादिनं सादी, निषादी च निषादिनम् ।
रथिको रथिकं पत्तिः, पत्तिं च स्फुर्त्तिमूर्त्तिभृत् ॥ २८ ॥
निशातशरधोरण्या, भटैर्दर्पसमुद्धवैः ।
अकालवृष्टिर्विहिता, कालरात्रिरिवापगा ॥ २९ ॥
रणे निपेतुर्मातङ्गास्तीव्रं प्रदग्जजेगः ।
शतकोटिक्षताः साक्षात् , पर्वता इव सर्वतः ॥ ३० ॥
शितकुन्ताहताश्वोच्छलच्छोणितदम्भतः ।
कौसुम्भवसनेवाभूदम्भोधिवसना युधि ॥ ३१ ॥
निजस्वामिप्रसादस्याऽभूम भूम्नाऽनृणा वयम् ।
इति वीरकबन्धास्ते, नृत्यन्तस्तत्र रेजिरे ॥ ३२ ॥
उल्लल्लोहिताम्भोभिर्भीमा सङ्ग्रामभूमिका ।
कबन्धानि वहत्याशु, काष्ठानीव तरङ्गिणी ॥ ३३ ॥

दैवाद्यम्पेशसैन्यस्य, सुभटैः करटैरिव ।
दिवान्धसैन्यवद्धर्षसैन्यं दैन्यमनीयत ॥ ३४ ॥
पताकिन्यपि निश्शेषा, तस्य हर्षमहीपतेः ।
ननाश काकनाशं सा, जीवमादाय सत्वरम् ॥ ३५ ॥
नश्यद्भिः पदिकैस्त्यक्तो, विनीतोऽपि गते विभौ ।
परं प्रेष्यैर्न तैर्मुक्तश्चेतनः सुकृतैरिव ॥ ३६ ॥
पलायमानः प्रैक्षिष्ट, स विनीतः सरस्वतीम् ।
तत्र स्नात्वा पयः पीत्वा, तीरवृक्षमशिश्रयत् ॥ ३७ ॥
अत्रान्तरे कान्दिशीकमेकमायुधपाणिना ।
केनचित्सादिना हन्यमानं मृगमवैक्षत ॥ ३८ ॥
कृपासंपूरितस्वान्तः, स तयोरन्तरा स्थितः ।
यतः प्राणिपरित्राणं, स्वप्राणैः केऽपि कुर्वते ॥ ३९ ॥
तस्मिन् सरङ्गे सारङ्गे, गते दूरं निरीक्ष्य सः ।
जगाद सादिनं रोषपोषिणं मृगरक्षणात् ॥ ४० ॥
सर्वप्राणिशरण्यानामुन्नतानां महात्मनाम् ।
त्वादृशां न समीचीनं, दीनजन्तुविनाशनम् ॥ ४१ ॥
मन्ये त्वं लक्षणैरेभिः, कोऽप्यसि क्षत्रियोत्तमः ।
शस्त्रघातो गृहीतास्त्रे, क्षत्रियाणां प्रशस्यते ॥ ४२ ॥
इत्यादिवाक्यैः पीयूषपेशलैस्तस्य तन्वतः ।
स भूपः पृथिवीचन्द्रः, प्रबुद्धः कोपमत्यजत् ॥ ४३ ॥
धर्मोपदेशदातासौ, ममाभूदिति तं समम् ।
उपकारचिकीः क्ष्मापः, पुरे क्ष्मातिलकेऽनयत् ॥ ४४ ॥

तं **विनीतं** महीनाथः, स्वपुरे सचिवं व्यधात् ।
सर्वाधिकारिणं यस्माद्गुणैः कस्को न रज्यते ॥ ४५ ॥
एतस्यानुपदं तेऽथ, त्रयोऽपि प्राच्यकिंकराः ।
तामेव नगरीं प्राप्य, सेवाहेवाकिनोऽभवन् ॥ ४६ ॥
रक्षता सततं तेन, न्यायेन नगरीजनम् ।
ऊर्जितोपार्जिता कीर्त्तिरात्मीयोऽर्थस्तु साधितः ॥ ४७ ॥
तेनेत्युक्ताः कर्मकृतः, स्नेहात्किमपि याचत ।
तेऽवदन्निति निर्लोभाः, भाग्यैर्लभ्या हि किंकराः ॥ ४८ ॥

अथ **क्षमापुरी** भग्ना, क्षणादेव **जितारिणा** ।
चम्पापुरीमहीपेन, सर्वसैन्यजुषा रुषा ॥ ४९ ॥
स्वपुरीस्वपुरीस्वामिभङ्गतो वित्तहानितः ।
**विपत्राक्यो** विनीतात्मा, प्रवव्राज विरागवान् ॥ ५० ॥
तप्यमानस्तपस्तीव्रं, सहमानः परीषहान् ।
अधीयानः स सिद्धान्तं, तन्वन्नाराधनां गुरौ ॥ ५१ ॥
पापकर्मसु तन्द्रालुः, श्रद्धालुर्धर्मकर्मसु ।
दयालुः सर्वभूतेषु, स्पृहयालुः शिवाध्वनि ॥ ५२ ॥
सासहिर्श्चोपसर्गाणां, शीलाङ्गानां च वावहिः ।
चाचलिः श्रमणाचारे, सिद्धान्ताध्वनि पापतिः ॥ ५३ ॥
आजगाम समं स्वेन, गुरुणा करुणानिधिः ।
तत्र **क्ष्मातिलकपुरे**, **विपत्राक्यमुनिः** क्रमात् ॥ ५४ ॥
चतुर्भिः कलापकम् ॥

अनुज्ञाप्य गुरून् सोऽथ, मासक्षपणपारणे ।
प्रविवेश परिभ्राम्यन्, **विनीतसचिवौकसि** ॥ ५५ ॥

कथमेवंविधो भूत्वाऽस्माकीनस्वामिनः पिता ।
उच्चनीचादिगेहेषु, पर्यटत्येष दुर्बलः ॥ ५६ ॥
ततस्तमघसङ्घातघातिनं व्रतिनं मुदा ।
कर्ममर्मच्छिदं कर्मकृतः सर्वे ववन्दिरे ॥ ५७ ॥
तद्दत्तमन्नपानाद्यमकल्प्यमिति चेतसि ।
विचिन्त्य नाग्रहीत्साधुर्व्यावृत्त्योपाश्रयं गतः ॥ ५८ ॥
आगतस्य नृपावासाद्विनीतस्य च तस्य ते ।
प्रमोदमेदुराः कर्मकरास्तच्च न्यवेदयन् ॥ ५९ ॥
तथैव सुविनीतात्मा, विनीतो मन्त्रिपुङ्गवः ।
तपःपात्रस्य शिश्राय, मुनेः पितुरुपाश्रयम् ॥ ६० ॥
निरीक्ष्य विषवाक्यस्य, मुनेरास्यसितद्युतिम् ।
विनीतसचिवाधीशचित्ताम्भोधिरवर्द्धत ॥ ६१ ॥
शुशोच च स्वं यदयं, मम वेश्मागतोऽपि हि ।
अगृहीतान्नपानीयो, मुनिर्व्यावृत्य जग्मिवान् ॥ ६२ ॥
स विनीतस्ततः शुद्धश्रद्धासंभारसंभृतः ।
अवन्दत गुरून् पूर्वं, तथा च जनकं निजम् ॥ ६३ ॥
ततो गुरुरभाषिष्ट, स्पष्टवाग्मन्त्रिनायक ! ।
शृणु धर्मवचश्चारु, क्षिप क्षिप्रमघव्रजम् ॥ ६४ ॥
मा मुहस्त्वं मुधाऽत्रेहेऽमुष्मिन् संसारकारिणि ।
आदरं कुरु सद्धर्मे, ध्रुवं संसारहारिणि ॥ ६५ ॥
धर्मः पितेव मातेव, हितं यद्विदधात्ययम् ।
क्रियते तन्न केनापि, शिशूनामिव देहिनाम् ॥ ६६ ॥

स च धर्मस्तितिक्षादिर्भिक्षूणां दशधा मतः ।
सम्यक्त्वमूलो गृहिणां, ज्ञेयो द्वादशधा पुनः ॥ ६७ ॥
देवेऽर्हति गुरौ साधौ, धर्मे च जिनभाषिते ।
या स्थिरा वासना सम्यक्सम्यक्त्वमिदमाश्रय ॥ ६८ ॥
स्थूलहिंसादीनि पञ्चाणुव्रतानि गुणत्रिकम् ।
शिक्षाव्रतचतुष्कं च, स्वीकुरुष्व शिवश्रिये ॥ ६९ ॥
विधेहि विधिना मन्त्रिन् !, त्रिसन्ध्यं देवतार्चनम् ।
चिरं चारुयशः कुन्दधवलं प्राप्नुहि स्फुटम् ॥ ७० ॥
दीनादीनां श्रियं देहि, विधेहि विशदं मनः ।
न्यायाध्वनि भवाध्वन्यो, भिन्द्धि क्रोधादिशात्रवम् ॥ ७१ ॥
जिनेन्द्रमुखसंभूतं, सिद्धान्तं सादरं शृणु ।
सिद्धिसीमन्तिनीं शर्मदायिनीं तत्क्षणाद्वृणु ॥ ७२ ॥
सर्वसौख्यमयं स्थानं, क्वापि मोक्षं विना न यत् ।
विद्यते देहिभिर्भाव्यं, तत्तदर्थं समुत्सुकैः ॥ ७३ ॥

तथा च—

जीवाजीवपुण्यपापाश्रवसंवरनिर्जराबन्धमोक्षानि नव तत्त्वानि । दानशीलतपोभावनामयश्चतुर्विधो धर्मः । आश्रवपञ्चकाद्विरतिः पञ्चेन्द्रियाणां निग्रहः क्रोधमानमायालोभलक्षणदुर्जयकषायजयः मनोदण्डवचनदण्डकायदण्डत्रयविरमणं चेति सप्तदशधा संयमः । नरकगति–तिर्यग्गति–मनुष्यगति–देवगतिलक्षणाश्चतस्रो गतयः । मतिज्ञानं श्रुतज्ञानमवधिज्ञानं मनःपर्यवज्ञानं केवलज्ञानमिति पञ्च [ज्ञानानि] । अनित्यता–अशरण–भव–एकत्व–अन्यता–अशौच–आस्रव–संवर–निर्जरा–धर्मस्वाख्याततता–लोक–बोधिप्रमुखा भावना

द्वादश । नमस्कारसहित–पौरुषी–पुरिमार्द्ध–एकासनक–एकस्थानक–आचामाम्ल–उपवास–चरिम–अभिग्रह–विकृतिप्रभृतिदशविधं प्रत्याख्यानम् । अथवा–"अनागतमतिक्रान्तं, कोटीसहितं नियन्त्रितं चैव । साकारमनाकारं, परिमाणकृतं निरवशेषम् ॥ संकेतमद्धा" चैतदपि दशविधम् । क्षुधा–पिपासा–शीत–उष्ण–दंश–अचेल–अरति–स्त्री–चर्या–निषीधिका–शय्या–आक्रोश–वध–याचना–अलाभ–रोग–तनुस्पर्श–मल–सत्कारपुरस्कार–प्रज्ञा–सम्यक्त्व [लक्षणाः] द्वाविंशतिपरीषहाः । स्पर्शन–रसन–घ्राण–चक्षुः–श्रोत्राणीन्द्रियपञ्चकम् । औत्पत्तिकी वैनयिकी कार्मजा पारिणामिकी चेति चतस्रो बुद्धयः । आर्त्तध्यानं रौद्रध्यानं धर्मध्यानं शुक्लध्यानं चेति चतुर्विधं ध्यानम् । पदस्थं पिण्डस्थं रूपस्थं रूपातीतमेतदपि चतुर्धा । ज्ञानं दर्शनं चारित्रं चेति रत्नत्रयम् । कृष्णलेश्या नीललेश्या कापोतलेश्या तेजोलेश्या पद्मलेश्या शुक्ललेश्या चेति [लेश्या] षट्कम् । सामायिकं चतुर्विंशतिस्तवो वन्दनकं प्रतिक्रमणं कायोत्सर्गः प्रत्याख्यानं [चेति] षड्विधमावश्यकम् । पृथ्वीकायोऽप्कायस्तेजस्कायो वायुकायो वनस्पतिकायस्त्रसकायश्चेति षड् जीवनिकायाः । मनोयोगो वचनयोगः काययोगश्चेति योगत्रयी । ईर्यासमिति–भाषासमिति–एषणासमिति–आदाननिक्षेपसमिति–उत्सर्गसमिति [लक्षणाः] पञ्च समितयः । इन्द्रियपञ्चकं मनोबलं वचनबलं कायबलं चेति बलत्रयं उच्छ्वासो निःश्वास आयुश्चेति दशविधाः प्राणाः । मद्यं विषयाः कषाया निद्रा विकथाश्चेति प्रमादपञ्चकम् । अनशनमूनोदरता वृत्तिसंक्षेपो रसत्यागस्तनुक्लेशः संलीनता चेति षड्विधं बाह्यं तपः । प्रायश्चित्तं वैयावृत्यं स्वाध्यायो विनयो व्युत्सर्गः शुभध्यानं चेत्याभ्यन्तरं षड्विधं

तपः । आहारसंज्ञा—भयसंज्ञा—मैथुनसंज्ञा—परिग्रहसंज्ञा [रूपाः] चतस्रः संज्ञाः । ज्ञानावरणीयं दर्शनावरणीयं वेदनीयं मोहनीयमायुष्कं नाम गोत्रमन्तरायं चेत्यष्टधा कर्म । मनोगुप्तिर्वचनगुप्तिः कायगुप्तिरिति गुप्तित्रयं । अपायापगमातिशयः ज्ञानातिशयः पूजातिशयो वचनातिशयश्चेति चत्त्वारोऽतिशयाः ।

तथा च श्रीजिनेश्वराणां च चतुस्त्रिंशदतिशया यथा—

देहोऽद्भुतरूपगन्धो निरामयः स्वेदमलविवर्जित इति प्रथमः उच्छ्वासनिःश्वासौ कमलपरिमलोपमाविति द्वितीयः । रुधिरामिषे तु गोक्षीरधाराधवले अनामगन्धिके चेति तृतीयः । आहारनीहारविधी अदृश्यौ चेति चतुर्थः । अदृश्ये इति मांसचक्षुषा न पुनरवध्यादिलोचनेन पुंसा । यदाहुः—

"पच्छन्ने आहारे अदिस्से मंसचक्खुणो ।" एष चतुर्थः ।

एते चत्वारोऽपि जगतोऽप्यतिशेरते तीर्थकरा एभिरित्यतिशयाः, सहोत्थाः सहजन्मानः । अथ कर्मक्षयजा अतिशयाः—योजनप्रमाणेऽपि क्षेत्रे समवसरणभुवि नृणां देवानां तिरश्चां च कोटिकोटिसङ्ख्यमवस्थानमिति प्रथमः कर्मक्षयजोऽतिशयः । वाणी अर्द्धमागधी नरतिर्यक्सुरलोकभाषया संवदति तद्भावाभावेन परिणमतीत्येवंशीला, योजनमेकं गच्छति व्याप्नोत्येवंशीला योजनगामी चेति द्वितीयः । भानां प्रभाणां मण्डलं भामण्डलं मौलिपृष्ठे शिरःपश्चिमभागे तच्च विडम्बितदिनकरबिम्बलक्ष्मीमनोहरमिति तृतीयः साग्रे पञ्चविंशतियोजनाधिके गव्यूतिः क्रोशद्वये गव्यूतीनां शतद्वं योजनशत इत्यर्थः, रोगो ज्वरादिर्न स्यादिति चतुर्थः । तथा वैरं

